
LUXOR SUPER OFFER
FREE!
LUXOR COLOUR FUN BOOKS
COLOUR FUN
Colour Fun
Buy
ANY OF THESE 4 DISNEY PEN SETS AND GET AN EXCITING LUXOR COLOUR FUN BOOK FREE!
ENTER THE MAGIC WORLD OF LUXOR COLOUR. ENTER THE WORLD OF EXCITEMENT.
Luxor®
Everyday, India writes the Luxor way.
Luxor Pen Company, 5631, First Floor, Qutab Road, New Delhi-110055, Tel.: 514885, Cable: HITECPEN.
CLARION D 4288

# GET OFF TO A FLYING START *with*



LION
## PREMIER® HB PENCILS

Supersmooth for effortless writing. Micronized lead for unbreakable points. Grace the desks of executives and others with style.




LION
## *PINKY*® PENCILS

Perfect classmates. Pretty & Practical.. Colourful designs, strongly bonded lead for unbreakable points, give it an edge over the competition.








LION *Gee-flo*® BALLPENS
035 carbine 050 carborite

Tungsten carbide tips.
Made with Swiss technology.
Unbeatable points. Sharp. Smooth. Non-smudging. Race across the page. Choice of red, black and blue refills. Mini-marvels at a marvellous price.




**LION PENCILS LTD.** 95, Parijat, Marine Drive, Bombay 400 002.

National-728

# चन्दमामा

एप्रिल्-१९९२

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. ४-००

वार्षिकं ग्राहकशुल्कं रू. ४८-००

# चन्दमामा

संस्थापकः – **'चक्रपाणिः'** सञ्चालकः – **'नागिरेड्डी'**

भवत्सु बहूनां वार्षिकपरीक्षा समाप्ता स्यात्। केचन परीक्षासमाप्तिं प्रतीक्षमाणाः स्युः। 'परीक्षानन्तरं प्राप्यमाणः ग्रीष्मविरामः कथं ससन्तोषं यापनीयः' इति तु सर्वे चिन्तयन्तः स्युः। स्वस्य जीवने विद्यायाः कीदृशं पात्रम् अस्ति इति चिन्तनार्थं किं न एषः योग्यः कालः?

परीक्षातरणं, पदवीप्राप्तिः, उद्योगसम्पादनं, सुखेन जीवनम् इत्येते केवलं विद्यायाः लक्ष्याणि? समाजबान्धवानां विषये किं चिन्तनीयं नास्ति? स्वजीवनविषये, समाजबान्धवानां विषये, विधिहतानां विषये, उपेक्षितनिर्धनादीनां विषये, अस्वस्थाङ्गहीनादीनां विषये वा किं चिन्तनीयं नास्ति? विद्या नाम सा, या पूर्वोक्तेषु विषयेषु चिन्तनार्थम् अस्मान् प्रेरयति। विद्या नाम सा, या 'आनन्दः विभज्य स्वीकरणीयः' इति बोधयति।

एतस्य न अयम् अर्थः यत् परिसरविषये समाजविषये वा वयम् अन्धाः इति। यः विषयः अस्माकं हृदयं स्पृशति तद्विषये वयं चिन्तयित्वा कार्योद्यताः भवामः एव। किन्तु विषयः एव स्वयम् आगत्य अस्मान् स्पृशेत् इति प्रतीक्षा किमर्थम्? वयं स्वयं समाजसेवायाम् उद्युक्ताः भवाम।

वयं प्रतिदिनं बहूनां कष्टव्यथादिकं पश्यामः। 'तत्तस्य पूर्वजन्मनः कर्मणः फलं स अनुभवति' इति विचिन्त्य तूष्णीं तिष्ठामः। स्पष्टैः शब्दैः वक्तव्यं चेत् एषः पलायनवादः इति उच्यते। समाजसेवा अस्माकम् आद्यं कर्तव्यम्। समाजहितचिन्तनं, सामाजिकसमस्यानां निवारणार्थम् उपायस्य चिन्तनं प्रवृत्तिः च सर्वेषां स्यात्। एतया दृष्ट्या विद्या अस्मान् प्रेरयेत्।

अस्माकं सम्पत्तिः सम्पत्तेः कश्चन भागः वा यदि समाजसेवार्थं दीयेत, सम्पत्तेः विभज्य स्वीकारे एव परमानन्दः इति यदि अवगम्येत तर्हि बह्व्यः सामाजिकसमस्याः स्वयं लुप्ताः भवेयुः। विद्यया प्राप्तं ज्ञानम् अन्येभ्यः अपि दत्तं चेत् न अस्माकं काऽपि हानिः। प्रत्युत अस्माकं ज्ञानं प्रगतिः च वर्धते।

आगच्छन्तु मित्राणि, एतया दृष्ट्या प्रयत्नस्य आरम्भं करवाम।

सम्पुटः – ९ एप्रिल् – १९९२ सञ्चिका – १

प्रतिकृतिमूल्यं रू. ४-०० * वार्षिकं ग्राहकशुल्कं रू. ४८-००



रसप्रश्नाः –

# रावणसंहारानन्तरम्

(सेतुं निर्माय कपिसेना लङ्कासमीपम् आगता। युद्धम् आरब्धम्। वीराधिवीराः हताः अभवन्। अन्ते रामरावणयोः घोरं युद्धं प्रवृत्तम्। रामः ब्रह्मास्त्रेण रावणं हतवान्। रावणस्य हननस्य अनन्तरं याः घटनाः प्रवृत्ताः ताः आधारीकृत्य वाल्मीकिरामयणकथानुसारम् अधः केचन प्रश्नाः सज्जीकृताः सन्ति। युक्तम् उत्तरं जानन्तु।)

I. 'मरणान्तानि वैराणि' इत्येतत् प्रसिद्धं वाक्यं कः कम् उद्दिश्य उक्तवान्?

(अ) लक्ष्मणः रामम् उद्दिश्य।

(आ) विभीषणः रामम् उद्दिश्य।

(इ) रामः विभीषणम् उद्दिश्य।

II. रावणस्य उत्तरसंस्कारः केन कृतः?

(अ) केनापि न कृतः। (आ) विभीषणेन कृतः।

(इ) रावणपुत्रेण बन्धुना वा केनचित्।

III. जयप्राप्त्यनन्तरं विभीषणस्य पट्टाभिषेकं निर्वर्त्य रामः सीतायाः समीपं कं प्रेषितवान्?

(अ) अनुजं लक्ष्मणम्। (आ) प्रियसखं हनूमन्तम्।

(इ) स्वयम् एव गतवान्।

IV. 'न कश्चित् न अपराध्यति' (सर्वे अपराधं कुर्वन्ति एव) इति प्रसिद्धं वचनं केन कम् उद्दिश्य उक्तम्?

(अ) रामेण विभीषणम् उद्दिश्य।

(आ) सुग्रीवेण लक्ष्मणम् उद्दिश्य।

(इ) सीतया हनूमन्तम् उद्दिश्य।

V. जयं प्राप्तवन्तं रामं दृष्टवत्याः सीतायाः प्रथमप्रतिक्रिया का आसीत्?

(अ) रुदती 'आर्यपुत्र!' इत्येतावत् उक्तवती।

(आ) सन्तोषेण भक्त्या च रामं नमस्कृतवती।

(इ) कोपकारणतः मौनम् आश्रितवती।

उत्तराणि–

I. – (इ). II. – (आ). III. – (आ). IV. – (इ). V. – (अ).

# विश्वसंस्थायाः नूतनः प्रधानकार्यदर्शी



ईजिप्ट्देशीयः भूतपूर्वः उपप्रधानः श्री बौट्रोस् घाली नूतनसंवत्सरारम्भदिने विश्वसंस्थायाः प्रधानकार्यदर्शिपदम् अलङ्कृतवान्। प्रपञ्चराजकीयव्यवहारे कुञ्चिकाप्रायम् एतत् पदं निर्वहतः घालिवर्यस्य वयः नवषष्टिवर्षाणि।

विश्वसंस्थायाः प्रधानकार्यदर्शिस्थानं यथा गौरवास्पदं तथैव कार्यभारयुक्तम् अपि। अतः अत्र विशिष्टः पुरुषः केवलं साफल्यं प्राप्तुम् अर्हति।

ईजिप्ट्देशस्य मन्त्री सन् घालिवर्यः केषुचित् सन्दर्भेषु यान् निर्णयान् स्वीकृतवान् ततः सः प्रपञ्चवरिष्ठानां दृष्टिपथम् आगतः। १९७९ तमे वर्षे ईजिप्ट्-इस्रेल्सन्धिनिमित्तं तेन विशेषपरिश्रमः कृतः। 'क्याप् डेविड् सन्धिः' इत्येतेन नाम्ना ख्यातस्य एतस्य सन्धेः कारणतः उभयदेशयोः मध्ये स्थितः सङ्घर्षः स्थगितः, यश्च कैश्चित् दशाब्दैः अनुवर्तमानः आसीत्। १९९० तमे वर्षे इराक्देशेन कुवैत्देशः यदा आक्रान्तः तदा सर्वे अरब्देशाः एककण्ठेन इराक्व्यवहारं दूषितवन्तः यत् तत्र घालिवर्यः एव सूत्रधारः आसीत्। एतस्मिन् सन्दर्भद्वये यत् नैपुण्यं प्रदर्शितं तेन घालिवर्यः अन्तारा‌ष्ट्रियस्तरे अभिज्ञानं गौरवं च प्राप्तवान्।

विश्वसंस्थायाः प्रधानकार्यदर्शिस्थानस्य निमित्तं घालिवर्यः अविरोधं चितः अस्ति।

बौट्रोस् घाली विश्वसंस्थायाः षष्ठः प्रधानकार्यदर्शी। इतः पूर्वं नार्वेदेशीयः ट्रिग्वेली, (१९४६-१९५२) स्विडन्देशीयः दाग् हेमर्स्क जोल्ड्, (१९५३-१९६१) जर्मादेशीयः युथाण्ट्, (१९६२-१९७१) आस्ट्रेलियादेशीयः डा. कुर्ट् वाल्डयीम्, (१९७२-१९८१), पेरुदेशीयः पेरेज् डि क्यूल्यर् इत्येते पञ्च तत् पदं निरूढवन्तः आसन्।

इदानीं प्रपञ्चे तत्र तत्र उद्रिक्तपरिस्थितिः दृश्यते। विशेषतः कम्पूचियादेशे युगोस्लावियादेशे च अशान्तिः प्रसृता दृश्यते। उभयत्र अपि शान्तिस्थापनं विश्वसंस्थायाः कार्यम् अस्ति। कम्पूचियादेशे पञ्चविंशतिवर्षेभ्यः अनुवर्तमानं सङ्घर्षं परित्यज्य विरोधिनः 'सुप्रीम् नेषनल् कौन्सिल्' व्यवस्थाम् अङ्गीकृतवन्तः। निर्वाचनद्वारा प्रजा-प्रतिनिधीनां चयनार्थं प्रजाप्रभुत्वस्य स्थापनार्थं च तत्र प्रयत्नः प्रचलति।

युगोस्लावियादेशे स्लोवेनिया, क्रोशिया इत्यादयः भागाः समूहात् पृथग्भूय स्वातन्त्र्यं घोषितवन्तः यत् तेन तत्र युद्धपरिस्थितिः उद्भूता दृश्यते। तस्मिन् देशे शान्तिस्थापनार्थं अमेरिका, रशिया इत्यादयः देशाः प्रयतमानाः सन्ति। पूर्वप्रस्तुतं देशद्वयं प्रति अपि विश्वसंस्थायाः शान्तिरक्षकदलं गतम् अस्ति।

प्रादेशिकसङ्घर्षं दूरीकृत्य विश्वशान्तेः परिरक्षणं करणीयम् इति तु विश्वसंस्थायाः प्रधानं लक्ष्यम्। एतदर्थं तु कार्यं करणीयम् एव। एतेन सह अन्यदपि दायित्वं निर्वोढव्यम् अस्ति घालिवर्येण। विश्वसंस्थायाः मार्गदर्शकसूत्रेषु परिष्काराः करणीयाः इति वचनं बहोः कालतः श्रूयते। भद्रतासमितौ जर्मनी-जपानदेशयोः शाश्वतसदस्यत्वम् अङ्गीकृत्य भद्रतासमित्याः विस्तारः कल्पनीयः इत्यपि अपेक्षा श्रूयते। भारतदेशस्थः अमेरिकाराजदूतः पाट्रिक् मोनीहान् एषु दिनेषु उक्तवान् अस्ति यत् भद्रतासमितौ भारतस्य अपि शाश्वतसदस्यत्वं स्यात् इति।

विश्वसंस्थायाः प्रदानकार्यदर्शित्वेन स्वस्य चयनं श्रुत्वा श्री घालिवर्यः उक्तवान्– "एतत् चयनं मम मद्देशस्य च गौरवास्पदं विषयः। इदानीं प्रपञ्चे परिवर्तनानि वेगेन जायमानानि सन्ति। अतः इदानीं विश्वसंस्थया महत्तरं दायित्वं निर्वोढव्यम् अस्ति। आत्मनः कर्तव्यस्य निर्वहणार्थम् अहं शक्तिम् अपि अतिक्रम्य कार्यं करिष्यामि" इति।

१९४५ तमे वर्षे विश्वसंस्था यदा स्थापिता तदा तत्र ५१ देशानां सदस्यता आसीत्। इदानीं १६६ देशाः तस्याः सदस्याः सन्ति। गते सप्टम्बर्मासे, सद्यः एव स्वातन्त्र्यं प्राप्तवन्तः बाल्टिक् देशाः, उत्तरकोरिया, दक्षिणकोरिया, मैक्रोनेषिया, मार्षल्द्वीपसमूहः च एतस्याः सदस्यत्वं प्राप्तवन्तः।



# सुवर्णमेखला

पद्मनाभपुरे प्रकाशः नाम युवकः आसीत्। सर्वकारीये कार्यालये उद्योगः तस्य। कदाचित् कार्यस्य निमित्तं तेन अन्यनगरं प्रति गन्तव्यम् आपतितम्। 'भवती गृहे एकाकिनी। अतः जागरूकता भवतु' इति पत्नीं जानकीम् उक्त्वा गृहतः प्रस्थितवान् प्रकाशः।

जानकी सायङ्काले सर्वाणि गृहकार्याणि समाप्य स्वागतप्रकोष्ठम् आगतवती। तावता सप्ततिवर्षीयः कश्चन वृद्धः गृहाभिमुखम् आगच्छन् तया दृष्टः। तस्य हस्ते एका पेटिका आसीत्। सः तदा एव शकटात् अवतीर्णः आसीत्। शकटचालकः तं वदति स्म– ''नगरपर्यन्तम् आगमिष्यामि इति उक्त्वा इदानीम् अत्रैव अवतरति खलु भवान्? कथम् एतत्?'' इति।

''नगरपर्यन्तं गमनम् इत्येव मम विचारः आसीत्। यदा अत्र आगतं तदा मया एकस्य बन्धोः गृहं स्मृतम्। अद्य रात्रौ अत्रैव स्थित्वा विश्रान्तिं स्वीकृत्य श्वः इतः अग्रे गमिष्यामि। यावत् दीयते इति उक्तं तावत् समग्रं भाटकं दीयते मया। अतः नगरपर्यन्तं मया न आगतं चेदपि भवतः न कोऽपि हानिः'' इति उक्त्वा धनं दत्त्वा वृद्धः गृहस्य सोपानानि आरूढवान्।

तम् इतः पूर्वं कुत्रापि न दृष्टवती आसीत् जानकी। सा आश्चर्येण तं पश्यन्ती पृष्टवती– ''कः भवान्? कस्य गृहम् एतत् इति भावितं भवता?'' इति।

वृद्धः समीपस्थे सुखासने उपविश्य दीर्घं निःश्वस्य– ''वत्से! वस्तुतः एतत् कस्य गृहम् इति अहं न जानामि। प्रातःकालं यावत् शयनं कर्तुम् अत्र अवकाशः दत्तः चेत् अहम् उपकृतः भवेयम्'' इति उक्तवान्।

तदा जानकी उक्तवती– ''भवान् रात्रौ



जानकी मेखलां दृष्ट्वा, वृद्धस्य वचनं च श्रुत्वा आश्चर्येण स्तब्धा। तदा वृद्धः स्वस्य इतिवृत्तम् एवं निरूपितवान्–

"नीलकण्ठः इति मम नाम। अहं कश्चन भूस्वामी आसम्। मम त्रयः पुत्राः। त्रयाणाम् अपि विवाहः जातः अस्ति। त्रयः अपि कृषिकार्ये ग्रामवासे च अनासक्ताः। कृषिकार्ये अनादरः तेषाम्। वाणिज्ये विशेषाभिरुचिः। पुत्राणां तृप्त्यर्थम् अहं मम समग्रं भूमिं विक्रीय धनं पुत्रेभ्यः दत्तवान्। ते नगरे वाणिज्यम् आरब्धवन्तः। नगरे एव तेषां वासः। अहं तु पत्न्या सह ग्रामे स्वगृहे निवसन् विश्रान्तिजीवनं यापयामि स्म। षड्भ्यः मासेभ्यः पूर्वं मम पत्नी हठात् दिवङ्गता। एकाकिनं मां पुत्राः नगरं नीतवन्तः। पुत्राणाम् आग्रहकारणतः अहं गृहम् अपि विक्रीतवान्। इदानीं गृहम् अन्याधीनं कृत्वा पत्न्याः आभरणानि स्वीकृत्य नगरं गच्छन् आसम्। मार्गे शाकटिकस्य व्यवहारः सन्देहास्पदम् आसीत्। सायङ्कालात् पूर्वं शाकटिकेन नगरं प्राप्तव्यम् आसीत्। किन्तु शाकटिकः कूर्मगत्या गच्छन् केनापि व्याजेन पेटिकाम् इतस्ततः अपसार्य उन्नीय च पेटिकायां किम् अस्ति इति परीक्षमाणः आसीत्। इतः परम् अन्धकारः प्रसरति। अतः अग्रे गमनम् अपायकरम् इति आलोच्य एतस्मिन् ग्रामे शकटात् अवतीर्णवान्। भवती मम असहायकताम् अवगत्य आश्रयं दद्यात् इति

अत्र तिष्ठति चेत् मम न काऽपि हानिः। किन्तु भवतः मुखदर्शनात् ज्ञायते यत् भवान् भीत्या आतङ्केन च युक्तः अस्ति इति। तस्य यत् कारणं तत् माम् अपि पीडयति चेत् कष्टं स्यात् खलु इति भीतिः मम" इति।

"सत्यं वत्से! अहं भयेन आतङ्केन च युक्तः अस्मि। तस्य कारणं प्रदर्शयिष्यामि" इति उक्त्वा समीपस्थायाः पेटिकायाः आवरणम् अपनीतवान् वृद्धः।

पेटिकायाः अन्तः बहूनि आभरणानि आसन्। तेषु काचित् मेखला अपि अन्यतमा आसीत्। वृद्धः मेखलां जानक्यै प्रदर्शयन्– "एतस्याः भारः कियान् स्यात् इति भवती जानाति वा? प्रायः षष्टितुलामितः स्यात्" इति उक्तवान्।

विचिन्त्य एतत् मम बन्धुगृहम् इति शाकटिकम् असत्यम् उक्त्वा अत्र आगतवान्" इति।

एतत्सर्वं श्रुत्वा जानकी– "भवता यत् कृतं तत् उचितम् एव। भवान् हस्तपादादिकं क्षालयतु। अहं भोजनार्थं सज्जीकरोमि" इति उक्त्वा पाकशालां गतवती।

भोजनसमये वार्तालापतः वृद्धस्य नीलकण्ठस्य जानक्याः च मैत्री प्रवृद्धा। भोजनानन्तरं नीलकण्ठः उक्तवान्– "श्वः नगरं गतेन मया काचित् समस्या सम्मुखीकरणीया" इति।

"का सा समस्या?" इति पृष्टवती जानकी।

"एतस्यां पेटिकायां शततुलामितं सुवर्णम् अस्ति। तत्र मेखलायाः भारः एव षष्टितुलामितः। एषा मेखला मया मम विवाहदिने पत्न्यै दत्ता आसीत्। अतः एतस्याः खण्डीकरणं द्रवीकरणं वा न इच्छामि। अतः एकस्यै स्नुषायै षष्टितुलासुवर्णं दातव्यम्। अन्ययोः कृते विंशतितुलामितं सुवर्णं दातव्यम्। एषः विभागः तासाम् अप्रीत्यै भवेत्। अतः किं करणीयम् इति न जानामि" इति उक्तवान् वृद्धः नीलकण्ठः।

जानकी क्षणकालम् आलोच्य उक्तवती– "या स्नुषा अधिकप्रीतिपात्रं भवति तस्यै मेखलां ददातु" इति।



"तत्रापि क्लेशः अस्ति एव। तिस्रः अपि मां समानादरेण प्रीत्या च पश्यन्ति। यदि इदानीं तासु कस्यैचित् अहं मेखलां ददामि तर्हि मया पक्षपातः आचरितः स्यात्। अतः एव चिन्ता मम" इति उक्तवान् नीलकण्ठः।

"भवत्समीपे आहत्य शततुलामितं सुवर्णम् अस्ति इति, तत्र मेखलायाः भारः एव षष्टितुलामितः इति, मेखलां भवान् खण्डीकर्तुं न इच्छति इति च भवतः स्नुषाः जानन्ति वा?" इति पृष्टवती जानकी।

"जानन्ति ताः। सायङ्कालात् पूर्वम् एव आगच्छतु इति साग्रहम् उक्तम् आसीत् ताभिः। रात्रिः जाता चेत् वृद्धः अहं क्लेशम् अनुभवेयम् इति आतङ्कः तासाम्। मयि तासां प्रीतिः असदृशी" इति उक्तवान्



नीलकण्ठः।

'एताः श्वशुरस्य वशे यत् सुवर्णम् अस्ति तत् प्राप्तुम् एव एवं प्रीतिम् अभिनयन्ति' इति आलोच्य जानकी उक्तवती– ''भवति का अधिकं स्निह्यति इति ज्ञातुम् अहम् एकं नाटकम् आरचयामि। तेन भवान् तासां नैजं रूपं ज्ञातुं शक्नोति। मेखलादानस्य समस्या अपि परिहृता भविष्यति'' इति।

''अस्तु तावत्। समस्यायाः परिहारः एव मम प्रधानं लक्ष्यम्। अतः इदानीं मया किं करणीयम् इति सूचयतु'' इति उक्तवान् नीलकण्ठः।

प्रातः जानक्याः वचनस्य अनुगुणम् एकं पत्रं सज्जीकृत्य तत्र हस्ताङ्कनम् उल्लिख्य जानक्यै दत्तवान् नीलकण्ठः। जानकी नगरस्थं नीलकण्ठगृहं प्रति कर्मकरद्वारा स्नुषाः उद्दिश्य वार्तां प्रेषितवती– ''भवतीनां श्वशुरः भवतीः त्वरया द्रष्टुम् इच्छति। पत्रवाहकेण एतेन कर्मकरेण सह भवत्यः शीघ्रातिशीघ्रम् आगच्छन्तु'' इति।

मध्याह्नसमये नीलकण्ठस्य स्नुषाः जानक्याः गृहस्य पुरतः शकटात् अवतीर्णवत्यः। तासाम् आगमनं ज्ञात्वा जानकी झटिति प्रकोष्ठं गत्वा नीलकण्ठं मञ्चस्य उपरि शाययित्वा कम्बलेन आच्छाद्य–"भवान् निश्चलं शयनं करोतु। भवतः स्नुषाणां परीक्षा भविष्यति इदानीम्'' इति उक्त्वा प्रकोष्ठतः बहिः आगतवती जानकी।

नीलकण्ठेन सज्जीकृतं पत्रं हस्तेन गृहीत्वा मुखद्वारसमीपे स्थितवती जानकी। तिस्रः अपि स्नुषाः जानकीं दृष्ट्वा– ''का भवती? त्वरया आगन्तव्यम् इति वार्तां प्रेषितवती भवती एव खलु? किमर्थं तथा वार्ता प्रेषिता? अस्माकं श्वशुरः किमर्थम् अत्र अस्ति? इति बहुधा पृच्छन्त्यः समीपम् आगतवत्यः।

जानकी तिसृणाम् अपि मुखं परीक्षादृष्ट्या पश्यन्ती– ''मम पतिः न्यायवादी अस्ति। भवतीनां श्वशुरः नीलकण्ठवर्यः मम पतिं दृष्ट्वा तस्य साहाय्येन स्वकीयं समग्रं सुवर्णं नगरस्थाय वृद्धाश्रमाय उपायनरूपेण अर्पितवान् अस्ति। तथा अर्पणं समाप्य एव सः अत्र आगतः'' इति उक्त्वा नीलकण्ठेन

लिखितं पत्रं ताभ्यः प्रदर्शितवती।

जानक्याः वचनस्य श्रवणात् पत्रस्य दर्शनात् च तासां मुखं विवर्णं जातम्। म्लानवदनाः ताः खेदमिश्रितेन स्वरेण पृष्टवत्यः– "सः इदानीं कुत्र? किमर्थं सः अस्मान् एवं वञ्चितवान्?" इति।

"न जाने, तेन एतादृशः निर्णयः किमर्थं स्वीकृतः इति। येन उत्तरं वक्तव्यम् आसीत् सः अद्य प्रातः परलोकं गतः। पार्श्वप्रकोष्ठे तस्य शरीरमात्रम् अस्ति। मम पतिः ग्रामप्रमुखान् आनेतुं गतः अस्ति" इति उक्तवती जानकी।

तदा ज्येष्ठा स्नुषा कोपं प्राप्य– "हन्त! प्रत्यहं काले काले एतस्य भोजनव्यवस्था या कृता तस्य फलं प्राप्तं मया। यदि एतस्मै भोजनं न दत्तं स्यात् तर्हि एषः उपवासकारणतः पूर्वम् एव मृतः अभविष्यत्। भोजनव्ययश्च सञ्चितः अभविष्यत्। सर्वं व्यर्थम्। स्नुषासु कीदृशी प्रीतिः आसीत् इति अद्य प्रमाणितम् अभवत्" इति उक्तवती।

"मया निद्राम् अपि परित्यज्य एतस्य सेवा कृता। यदि एषः सुवर्णराशिम् एवं कस्मैचित् दास्यति इति अहं पूर्वम् एव ज्ञातवती स्यां तर्हि एतस्मै विषं वा दद्याम्। तथा कृतं चेत् सुवर्णं वा रक्षितम् अभविष्यत्" इति सकोपम् उक्तवती द्वितीया स्नुषा।

"अहो व्यर्थपरिश्रमः मम! एतस्य तृप्त्यर्थं मया प्रतिदिनं उच्चैः पुराणं पठ्यते स्म। एतस्य



तोषणार्थं व्यजनेन वीजनं क्रियते स्म। भुजयोः मुखस्य च श्रमः व्यर्थः जातः। यदि पूर्वम् एव अहं मुसलेन एतस्य शिरः भञ्जयेयम् तर्हि सुवर्णं वा सञ्चितम् अभविष्यत्" इति उक्तवती तृतीया स्नुषा।

अनन्तरं तिस्रः अपि एकान्ते परस्परं समालोच्य– "मतिहीनः सः वृद्धः यथा उक्तवान् तथा आचरतां भवताम् अपि किं विवेकः नास्ति? स्नुषाभ्यः खलु तेन सुवर्णं दातव्यम् आसीत्? वृद्धाश्रमाय दाने किम् औचित्यम्? सर्वं समाप्तं खलु? किं खेदेन? वयं गृहं गत्वा पतीन् प्रेषयिष्यामः। भवती, भवत्याः न्यायवादी पतिः च ग्रामीणानां साहाय्यं प्राप्य अस्माकं पतीनाम् उपस्थितौ शवसंस्कारं कुरुताम्। वयं तु प्रस्थिताः" इति

उक्त्वा शकटम् आरुह्य ततः निर्गतवत्यः।

प्रकोष्ठे शयानः नीलकण्ठः स्नुषाणां वचनं श्रुत्वा दिग्भ्रान्तः। आत्मनः कर्णयोः एव अविश्वासः तस्य– मया यत् श्रुतं तत् मिथ्या स्यात् वा इति। स्नुषाणां वास्तविकं स्वभावं जानतः तस्य हृदये महत् दुःखम्।

जानकी प्रकोष्ठं प्रविश्य नीलकण्ठस्य पार्श्वे उपविश्य प्रीत्या तस्य स्कन्धे हस्तं निक्षिप्य– "तात! मानवस्य मनः कीदृशं भवति इति ज्ञातं खलु भवता? स्त्रीपुम्भेदं विना सर्वेषां मानवानां व्यवहारः समानतया प्रवर्तते। तत्रापि स्त्रियः मनः विचित्रम्। यदि तत् समीचीनं तर्हि स्वर्गः। यदि तत् असमीचीनं तर्हि नरकं चित्रहिंसा वा। सहोदराणां मध्ये भेदबुद्धिम् उत्पाद्य विभागम् अपि कर्तुम् अर्हन्ति स्त्रियः। भवतः स्नुषाः एव पश्यतु तावत्। भवत्समीपे यत् सुवर्णम् अस्ति तस्य प्राप्त्यर्थं ताः अपारां प्रीतिं प्रदर्शितवत्यः। अद्य तासां वास्तविकं रूपं भवता ज्ञातं खलु? अतः इतः परं वा स्वसमीपे धनं स्थापयतु भवान्। यावत् धनं भवति तावत् गृहसदस्याः भवतः सेवां कुर्वन्ति एव। मम पित्रा अपि पुत्रेषु विश्वासः कृतः। समग्रा सम्पत्तिः पुत्रेभ्यः दत्ता च। किन्तु स्नुषाणां कारणतः खिन्नः सः गृहात् निर्गतः। पुत्र्याः मम गृहे स्थितं चेत् जनाः उपहसेयुः इति भीतिः तस्य। अतः इदानीं सः नगरे वृद्धाश्रमे निवसति। तेन या गतिः प्राप्ता सा एव गतिः भवता अपि न प्राप्येत इति उद्देशेन मया नाटकम् आयोज्य भवतः स्नुषाणां स्वभावः परिचायितः। एतत् पत्रं यदर्थं सृष्टं तत् कार्यं समाप्तम् इदानीम्। विच्छिद्य क्षिपामि तावत्" इति उक्त्वा पत्रच्छेदनार्थम् उद्युक्ता।

तदा नीलकण्ठः तस्याः कार्यं निवारयन् उक्तवान्– "वत्से! अलं च्छेदनेन। वस्तुतः अपि मया वृद्धाश्रमाय तत् सुवर्णं दीयते। वृद्धाश्रमः कुत्र इति वदतु तावत्। सुवर्णदानं कृत्वा तत्रैव निवसन् मम शेषायुष्यं निश्चिन्ततया यापयिष्यामि" इति।





# अपूर्वस्य साहसगाथा

## १२

(रुद्रपुर्याः प्रधानमन्त्री, दुष्टः मान्त्रिकः वीरविकटश्च युवराज्ञ्याः कण्ठे स्थितं चन्द्रकान्तमणिम् अपहर्तुम् कपटोपायं रचितवन्तौ। वीरविकटः स्वगुरोः मन्त्रवादिन्याः समीपं गत्वा सर्वं निवेदितवान्। 'युवराज्ञी आनीय मम पादयोः पुरतः पातनीया' इति आज्ञापितवती मन्त्रवादिनी। त्रिशताधिकवर्षीया सा पुनर्यौवनं प्राप्तुम् इच्छति स्म। एताः सर्वाः घटनाः ज्ञाताः अपूर्वेण। तदनन्तरम्.....)

एतस्मिन् वर्षे काले वृष्टिः जाता अस्ति इत्यतः रुद्रपुर्याः जनाः सन्तुष्टाः सन्ति। सामान्यानां कृषिकाणां मुखे अपि मन्दहासः तृप्तिः च विलसति।

'समृद्धियुक्ते एतस्मिन् वर्षे युवराज्ञ्याः जन्मदिनोत्सवः सवैभवम् आचरणीयः' इति प्रजानाम् इच्छा। 'विविधाः कार्यक्रमाः आयोजनीयाः, महोत्सवः आचरणीयः' इति विश्वकर्ममहाराजस्य अपि इच्छा।

एतां वार्तां श्रुतवतः दुष्टमन्त्रिणः महान् सन्तोषः। सः महता उत्साहेन विश्वकर्मराजस्य समीपं गत्वा उक्तवान्– "महाप्रभो, युवराज्ञ्याः जन्मदिनोत्सवः आसन्नः अस्ति। एतस्मिन् वर्षे स च उत्सवः महता वैभवेन करणीयः इति प्रजाः इच्छन्ति। ममापि आशयः तथैव। महता वैभवेन



करणीयं चेत् महान् सन्नाहः अपि करणीयः खलु? एतदर्थम् अनुज्ञादानेन अनुग्रहणीयाः वयम्" इति।

आत्मना यत् चिन्तितं तदेव मन्त्रिणा अपि उच्यमानम् अस्ति इति राज्ञः महदाश्चर्यम्। युवराज्ञीविषयकप्रीत्या मन्त्री एवं वदन् अस्ति इति चिन्तयति राजा। मन्त्रिणः राजभक्तिं मनसि एव प्रशंसन् राजा अङ्गीकारं सूचयन् मन्दहासपूर्वकं शिरः चालितवान्।

घोरान्धकारमय्यां रात्रौ आकाशः मेघैः आच्छन्नः आसीत्। तदा तदा तीक्ष्णा तडित्। पुनः मेघगर्जनम्। तडिता सह अशनिपातः अपि। कदाचित् बिन्दुमयी वृष्टिः। पुनः कदाचित् अजस्रवृष्टिः।

एतादृश्यां घोररात्र्यां मान्त्रिकः वीरविकटः कृष्णवर्णीयं वेषं धृत्वा उषःकालतः अपि पूर्वम् एव, रुद्रपुर्याः सीमाभागे स्थितं कालिकालयं प्रति स्ववाहनं भल्लूकम् आरुह्य गच्छन् अस्ति। आलयस्था कालिकामाता राजपरिवारस्य आराध्यदेवी। भक्तानाम् अभीष्टानां पूरयित्री चापि। किन्तु आलयः अरण्यप्राये प्रदेशे अस्ति इत्यतः तत्र सामान्यदिनेषु अधिकः जनसञ्चारः न भवति।

अर्चकः तु सूर्योदयानन्तरम् आगत्य यथाविधि पूजां समाप्य सूर्यास्तसमये गृहं प्रतिगच्छति स्म। यावत् अर्चकः भवति तदा एव तत्र जनानां गमनागमनम्। ततः पूर्वं तदनन्तरं वा तत्र कोऽपि न सञ्चरति।

एतस्मात् दुर्गालयात् शतव्यामदूरे अरण्यान्तर्गतः कश्चन विशालः उन्नतः च वटवृक्षः अस्ति। तस्य वटवृक्षस्य समीपं गत्वा मान्त्रिकः वीरविकटः भल्लूकात् अवतीर्य– "अये अत्रैव तिष्ठतु। इतः कुत्रापि न गन्तव्यम्" इति आज्ञास्वरेण उक्त्वा दुर्गामन्दिरम् उद्दिश्य गतवान्।

आलयस्य उन्नतस्य द्वारगोपुरस्य समीपे कश्चित् स्थितः दृश्यते स्म। तं पश्यन् उक्तवान् मान्त्रिकः– "मम आगमने अल्पः विलम्बः जातः यत् तदर्थम् अहं क्षन्तव्यः। मन्त्रवादिन्याः समीपं पुनरपि गत्वा आगतवान् अस्मि। सा एकं तायतं दत्तवती

अस्ति। तत् भवता धृतं चेत् भवति भयं किञ्चिदपि न भविष्यति। सर्वं मङ्गलमयं भविष्यति" इति।

"धन्योऽहं मान्त्रिकवर्य! धन्योऽहम्। मम मित्रं भवान् मान्त्रिकः यत् तत् मम सौभाग्यम्। भवतः उपकारम् आजीवनं स्मरामि" इति उक्त्वा सः अपरः वीरविकटं भक्त्या नमस्कृतवान्। एवम् उक्तवान् न अन्यः, अपि तु दुष्टः प्रधानमन्त्री एव।

वीरविकटः स्यूततः एकं तायकं बहिः आनीय मन्त्रिणः हस्ते बद्धवान्। 'तायकं यस्य हस्ते भवति सः भवतः आज्ञाधारी विनीतः भविष्यति' इति उक्तवती आसीत् वृद्धा मन्त्रवादिनी। एतत् अजानन् मन्त्री भक्त्या तत् तायकं धृतवान् आसीत्। एवं धारणेन आत्मानं धन्यं मन्यते स्म सः।

"जन्मदिनोत्सवदिने युवराज्ञी देव्याः दर्शनार्थम् अत्र आगमिष्यति खलु? अस्मदनुकूलः एव मुहूर्तः निश्चितः खलु भवता?" इति प्रधानमन्त्रिणं पृष्टवान् मान्त्रिकः।

"आम्। अस्मदनुकूलः एव मुहूर्तः निश्चितः। सूर्यास्तानन्तरं द्वितीययामतः उषःकालं यावत् उत्तमः मुहूर्तः अस्ति इति उक्तवान् अस्मि" इति उक्तवान् प्रधानमन्त्री।

"मुहूर्तदिने घोरः अन्धकारः भविष्यति। यतः स च कृष्णपक्षे भविष्यति। अतः एव



अस्मत्कार्यसाधनार्थम् अपि एषः एव योग्यः मुहूर्तः" इति गर्वेण हसन् उक्तवान् वीरविकटः।

"दैवानुग्रहकारणतः अस्माकम् अभीष्टं निर्विघ्नं सेत्स्यति इति मम विश्वासः। मुहूर्तः स्थलम् इत्यादिकं सर्वम् अपि अस्मदानुकूल्याय एव। देवालयस्य कुञ्चिका आनीता अस्ति मया। अपायात् रक्षणार्थं कार्यस्य साधनार्थं वा आलयस्थः सुरङ्गमार्गः उपयोक्तुं शक्यः इति खलु उक्तम् आसीत् मया? सुरङ्गद्वारस्य उद्घाटनं पिधानं च अहं जानामि एव। राजकुटुम्बेन एतस्य सुरङ्गमार्गस्य उपयोगः इतः पूर्वं न कृतः। इतः परम् अपि एतस्य उपयोगः न क्रियेत



तेन। किन्तु स च मार्गः इदानीम् अस्मदानुकूल्याय अभवत्। अन्तः गत्वा सुरङ्गमार्गं परीक्ष्य आगच्छाव वा?" इति पृष्टवान् मन्त्री।

"अथ किम्? तदर्थम् एव खलु इदानीम् आवाम् अत्र सम्मिलितौ?" इति उक्तवान् वीरविकटः।

मन्त्री आलयस्य द्वारम् उद्घाटितवान्। उभौ अपि अन्तः गत्वा द्वारं पिहितवन्तौ। मन्त्री दुर्गादेव्याः पुरतः स्थितात् दीपात् अन्यं दीपं ज्वालयित्वा प्रकाशं वर्धितवान्। देव्याः विग्रहस्य पृष्ठभागे भित्तौ विविधानि शिल्पानि दृश्यन्ते स्म।

मन्त्री दीपशिखां सज्जीकृत्य तानि शिल्पानि परीक्ष्य अपेक्षितं शिल्पम् अभिज्ञातवान्। अनन्तरं दीपं पार्श्वे संस्थाप्य शिल्पस्य मुखं गृहीत्वा उभयपार्श्वे बलात् आकृष्टवान्। तावता विग्रहस्य पृष्ठतः भूमौ सुरङ्गद्वारं दृष्टिगोचरं जातम्।

मन्त्री मान्त्रिकः च अन्धकारमये सुरङ्गे पदं स्थापितवन्तौ।

एतावत्पर्यन्तं रहसि तयोः अनुसरणं कृतवान् अपूर्वः इदानीं चिन्तितवान् यत् सुरङ्गद्वारस्य पिधानं करिष्यामि इति। किन्तु 'दुष्टौ सुरङ्गस्य अपरद्वारेण पलायनं कर्तुम् अर्हतः एव' इति स्मृत्वा पूर्वतनं चिन्तनं परित्यक्तवान्। 'सुरङ्गस्य अपरं द्वारं कुत्र इति न ज्ञायते। अतः अहम् अपि तौ अनुसृत्य सर्वं ज्ञास्यामि' इति आलोच्य अपूर्वः यावत् एकं पदम् अग्रे स्थापितवान् तावता सुरङ्गद्वारं सशब्दं पिहितम् अभवत्। सुरङ्गद्वारस्य पिधानार्थम् अन्तर्भागे एव काऽपि व्यवस्था परिकल्पिता इति भाति इति आलोचितवान् अपूर्वः।

'आलयस्य द्वारं न कीलितम्। अतः मन्त्री मान्त्रिकः च मन्दिरसमीपं पुनः आगमिष्यतः इति तु निश्चितम्। इदानीं तयो प्रतीक्षणात् ऋते नान्या गतिः' इति आलोच्य अपूर्वः मन्दिरतः बहिः आगत्य स्तम्भस्य पृष्ठतः कोणे उपविष्टवान्।

एकघण्टानन्तरं मन्त्री मान्त्रिकः च आलयतः बहिः आगतवन्तौ। मन्त्री द्वारं पिधाय कीलयन् मान्त्रिकम् उक्तवान्—



भवन्ति चेदपि राजकुमार्याः अदर्शनं क्षणमात्रेण तस्याः सखीभिः ज्ञायते एव। अनन्तरं सर्वे तस्याः अन्वेषणार्थम् उद्युक्ताः भवन्ति। अतः कार्यसाधने विशेषजागरूकता आवश्यकी'' इति उक्तवान् मन्त्री।

''सर्वे अन्वेषणार्थम् उद्युक्ताः भवन्तु नाम। किन्तु राजकुमारी सुरङ्गमार्गेण नीयमाना अस्ति इति तु केनापि न ज्ञायते खलु? गर्भगृहे तादृशः मार्गः अस्ति इति जानन्तः अपि विरलाः स्युः। जानन्तः अपि यावत् स्मरेयुः तावता अस्माकं कार्यं समाप्तं भविष्यति'' इति उक्तवान् वीरविकटः।

''रहस्यमार्गस्य विषयं तु राजा, राज्ञी, सेनापतिः, देवालयस्य प्रधानार्चकः, अहं च जानीमः। अन्यः कोऽपि सर्वथा न जानाति'' इति उक्तवान् मन्त्री।

''प्रधानार्चकः अपि सुरङ्गमार्गं जानाति? तर्हि कष्टम् आपतितम्। सः कथमपि अस्माकम् उपायं ज्ञात्वा महाराजं निवेदयति चेत् का गतिः?'' इति आतङ्केन उक्तवान् वीरविकटः।

''सत्यं खलु? एषः अंशः इतः पूर्वं मया न लक्षितः एव। किं करणीयम् इदानीम्?'' इति चिन्तामिश्रितेन स्वरेण उक्तवान् मन्त्री।

''सायङ्काले युवराज्ञ्याः आगमनतः पूर्वम् एव अर्चकः मन्दिरम् आगमिष्यति खलु? तदा एव तं परलोकं प्रति प्रेषयिष्यामः। अहम् एव अर्चकवेषं धृत्वा युवराज्ञीं देवालयस्य अन्तः

''अहम् उपायेन युवराज्ञीं सुरङ्गमार्गस्य अन्तः नोदयिष्यामि। मया सूचितस्य क्रमस्य अनुगुणं झटिति द्वारस्य पिधानं भवतः कार्यम्। अनन्तरं भवान् सुरङ्गमार्गेण युवराज्ञीम् अरण्यमध्यं नीत्वा भवत्पक्षीयाणाम् अधीनां करोतु। ते च तां मन्त्रवादिन्याः समीपं नयन्तु'' इति।

''सुरङ्गस्य अपरपार्श्वे मत्पक्षीयः अन्यः कोऽपि न भवति। स्वयं मन्त्रवादिनी एव तत्र तिष्ठति। शुकशावकं गृध्रः इव युवराज्ञीं लीलया गृहीत्वा नेष्यति सा'' इति उक्तवान् मान्त्रिकः वीरविकटः।

''साधु, कार्यं यावच्छीघ्रं समाप्यते तावत् वरम्। यतः विनोदकार्यक्रमेषु जनाः मग्नाः

नेष्यामि। विग्रहप्रदक्षिणं पुण्याय इति उक्त्वा तां प्रदक्षिणार्थं प्रेरयित्वा यदा सा विग्रहस्य पृष्ठतः आगमिष्यति तदा सुरङ्गस्य अन्तः नोदयित्वा झटिति अहम् अपि अन्तः प्रविश्य सुरङ्गद्वारस्य पिधानं करिष्यामि" इति उक्तवान् वीरविकटः।

"योजना तु उत्तमा अस्ति। किन्तु एतदर्थम् अर्चकस्य प्राणाः अपहरणीयाः एव वा? अन्यः मार्गः नास्ति वा? अर्चकः तु उत्तमस्वभावयुक्तः। तस्य प्राणानाम् अपहरणं पापाय स्यात्" इति उक्तवान् मन्त्री।

"भवान् एवं भीरुः चेत् भाविनि काले भूमण्डलस्य शासनं कथं वा कुर्यात्? कार्यं साधनीयं चेत् यत्किमपि कर्तुं मनः सिद्धं स्यात्। अथवा अस्तु तावत्, भवतः इच्छायाः अनुगुणम् एव भवतु। अर्चकं कुत्रापि रहस्यस्थाने बन्धने स्थापयाम। भवतु खलु? इदानीं गच्छाव तावत्" इति उक्त्वा वीरविकटः वटवृक्षस्य समीपं गतवान्। मन्त्री तस्य अनुज्ञां प्राप्य ततः नगरं प्रति प्रस्थितवान्।

एतावत्पर्यन्तं स्तम्भस्य पृष्ठतः स्थित्वा सम्भाषणं शृण्वन् स्थितः अपूर्वः 'इदानीं कः अनुसरणीयः' इति क्षणकालम् आलोचितवान्।

'एतयोः दुस्तन्त्रं किम् इति तु सम्यक् ज्ञातम्। इतः परम् एतयोः अनुसरणेन किमपि प्रयोजनं नास्ति। अतः राजानं सर्वं निवेदयामि चेदेव वरं स्यात्। तदा तु दुस्तन्त्रस्य निवारणार्थं योग्यः उपायः अनुसर्तुं शक्येत। राजा कीदृशं मार्गम् अनुसरति इति ज्ञात्वा मया मदीयः मार्गः निश्चेतव्यः। अन्यद्वारा कारयितुं न शक्तं चेदेव मया प्रवर्तितव्यं, न अन्यथा। केनापि उपायेन एतत् कुतन्त्रं विफलीकरणीयम् इति तु निश्चितम् एव। विश्वकर्ममहाराजः मया कथं सूचनीयः? मम वचनेषु सः विश्वासं कथं प्राप्नुयात्?' इत्येवं गभीरचिन्तनं कुर्वन् स्थितवान् अपूर्वः।

—(अग्रिमसञ्चिकायां समाप्यते।)



# समीचीनम् उत्तरम्

शिवरामः कश्चन कृषिकः। कस्याञ्चित् दुर्घटनायां तस्य पुत्रः स्नुषा च मरणं प्राप्तवन्तौ। अतः पौत्रयोः पोषणव्यवस्था शिवरामेण एव करणीया अभवत्। शिवरामः पौत्रौ प्रीत्या पश्यति। शिवरामस्य अन्या सम्पत्तिः न आसीत्, ऋते गृहतः। यथा यथा वार्धक्यं वर्धते तथा तथा शिवरामः अधिकां चिन्तां प्राप्नोति— मम जीवितस्य अनन्तरं मम पौत्रयोः का गतिः? इति। एषा चिन्ता तं दिवारात्रं दहति स्म।

एषु एव दिनेषु बाल्यमित्रं रामचन्द्रः शिवरामस्य गृहम् आगतवान्। शिवरामः तं स्वस्य चिन्तां निवेदितवान्।

रामचन्द्रः शिवरामस्य पौत्रौ स्वसमीपम् आहूय उक्तवान्— "भोः, अहं भवन्तौ एकं प्रश्नं पृच्छामि। चिन्तनं कृत्वा उत्तरं वक्तव्यम्। यः समीचीनम् उत्तरं वदति तस्मै पारितोषिकरूपेण दश रूप्यकाणि दास्यामि" इति।

शिवरामपौत्रौ शिरश्चालनपूर्वकम् अङ्गीकारं सूचितवन्तौ। रामचन्द्रः तौ उक्तवान्— "यदि भवतोः पुरतः देवः प्रत्यक्षः भवेत् तर्हि भवन्तौ कं वरं प्रार्थयतः? प्रार्थनया महान् लाभः यथा स्यात् तथा प्रार्थनीयं भवद्भ्याम्" इति।

किञ्चित्कालं विचिन्त्य ज्येष्ठः शिवरामपौत्रः उक्तवान्— "जीवने कोऽपि अभावः न स्यात्। अतः अहं भगवन्तम् उत्तमं क्षेत्रं प्रार्थयिष्यामि" इति।

तदा कनिष्ठपौत्रः झटिति उक्तवान्— "अभावदूरीकरणार्थं क्षेत्रस्य का आवश्यकता? अहं तु तादृशम् अङ्गुलीयकं प्रार्थयिष्यामि यद्बलात् मया अभिलषितानि सर्वाणि वस्तूनि प्राप्येरन्" इति।

रामचन्द्रः हसन् शिवरामस्य कनिष्ठपौत्राय दश रूप्यकाणि दत्त्वा शिवरामम् उक्तवान्— "भवान् भवदीयं गृहं ज्येष्ठाय पौत्राय ददातु। सः अत्रैव जीवनं यापयिष्यति। कनिष्ठपौत्रस्य विषये चिन्ताम् एव मा करोतु। सः व्यवहारकुशलः। तम् अहं मया सह नेष्यामि। भाविनि काले भवतोः साहाय्यं यथा कुर्यात् तथा तं सज्जीकरिष्यामि" इति।

रामचन्द्रस्य सूचनायाः अनुगुणम् एव कृतवान् शिवरामः। अतः तस्य वार्धक्यजीवनं निश्चिन्तम् अभवत्।





# वीरः वीरबाहुः

यत् कार्यं स्वीकृतं तत् यशस्वितया समापनीयम् एव इति आलोच्य त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान्। ततः यथापूर्वं मौनं श्मशानमार्गम् अनुसृतवान्।

तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्! मध्यरात्रे एवं निरन्तरपरिश्रमं कुर्वतः भवतः दृढव्रतता नितरां श्लाघ्या। किन्तु अहं तु न जाने यत् भवतः एतस्य परिश्रमस्य कारणं किम् इति। यतः भवान् राजा अतः अहं भावयामि यत् भवान् सामान्यजनस्य निमित्तम् एतत् कार्यं कुर्वन् न स्यात् इति। यदि भवान् अन्यस्य राज्ञः सम्राजः वा निमित्तं कार्यं कुर्वन् स्यात् तर्हि एकं तु स्मर्तव्यं यत् राजा सम्राट् वा सर्वदा वचनपरिपालने बद्धादरः न भवति इति। अतः तादृशेषु विशेषविश्वासः न करणीयः एव। अत्र

## वेतालकथा



उदाहरणरूपेण काञ्चित् कथां श्रावयामि, यस्यां च कश्चित् राजा वचनभङ्गं कृतवान्, महावीरः कश्चित् भीरुः इव व्यवहृतवान्, काचित् राजकुमारी च अविवेकं प्रदर्शितवती। कथा श्रद्धया श्रुता चेत् मार्गायासः परिहृतः भवेत्" इति।

अनन्तरं वेतालेन कथा आरब्धा—

वैशालीनामकं राज्यं पद्मप्रियः नाम राजा पालयन् आसीत्। तस्य शासने जनाः शान्ततया जीवन्ति स्म। किन्तु तेषां शान्तेः भङ्गप्रसङ्गः कश्चन आगतः। कश्चन क्रूरः मृगः राजधान्याः समीपे स्थितेषु ग्रामेषु रात्रौ हठात् आक्रमणं कृत्वा जनान् मारयित्वा क्षणमात्रेण अदृश्यः भवति स्म। सः क्रूरमृगः कुतः आगच्छति, कुत्र निवसति इति तु कोऽपि ज्ञातुं न शक्नोति स्म। प्रतिदिनम् अपि कस्मिंश्चित् ग्रामे तस्य आक्रमणं प्रचलति एव। यदा जनानां कोलाहलः श्रूयते तदा सः अदृश्यतां गच्छति स्म।

क्रूरमृगस्य आक्रमणविषये विविधाः कल्पिताः कथाः अपि देशे प्रसृताः आसन्। केचन वदन्ति स्म यत् पूजादिकम् अप्राप्य काचित् कुपिता देवता एवं विचित्रमृगरूपेण आगत्य जनान् मारयति इति। अन्ये केचन वदन्ति स्म यत् देशस्य आराध्यदेवी कालीमाता एव कोपं प्राप्य एवं विचित्ररूपेण आगत्य जनान् नाशयन्ती अस्ति इति।

पूजा-होम-जपादिभिः देवी तोषिता चेत् एषा पीडा निवारयितुं शक्या इति उक्तवन्तः केचन। तादृशः प्रयत्नः अपि प्रवृत्तः। तथापि मृगेण क्रियमाणं जनमारणं तु अनुवर्तते एव। स्वमत्यनुगुणं कृताः प्रयत्नाः विफलाः इत्यतः जनानाम् आतङ्कः नितरां प्रवृद्धः। 'अग्रे इतोऽपि महती विपत् आपतिष्यति' इति परस्परं वदन्तः ते भीतिपरिसरं स्वयं वर्धयन्ति स्म।

तस्य क्रूरमृगस्य ग्रहणार्थं राजा पद्मप्रियः भटान् प्रेषितवान्। किन्तु ते तं क्रूरमृगं मारयितुं न शक्तवन्तः, प्रत्युत स्वयं तेन मारिताः अभवन्। एतस्याः घटनायाः अनन्तरं तु समग्रे वैशालीदेशे आतङ्कपरिसरः उत्पन्नः। रात्रौ कोऽपि निद्रां न करोति, दिने

कोऽपि वा शान्त्या स्थातुं न शक्नोति। सर्वत्र भीतिः, सर्वत्र आतङ्कः।

'प्रजानां भीतेः अपसारणं राज्ञः मम कर्तव्यम्' इति आलोच्य राजा मन्त्रिणा सह युवराज्ञ्या विवेकवत्या सह च समालोचनं कृतवान्।

समालोचनस्य अनन्तरं राज्ञा सडिण्डिमघोषं वार्ता प्रसारिता यत् यः तं क्रूरमृगं मारयति तस्मै अर्धं राज्यं युवराज्ञी च दीयते इति। एतद्विषये युवराज्ञ्या अङ्गीकारः सूचितः आसीत् एव।

एतदनन्तरं बहवः युवकाः उत्साहेन तं क्रूरं मृगं मारयितुं प्रयत्नं कृतवन्तः। किन्तु ते स्वयं तेन मृगेण मारिताः अभवन्।

तस्य राज्यस्य सीमाप्रदेशे किञ्चन अरण्यम् आसीत्। तत्र वीरबाहुः नाम शबरनायकपुत्रः निवसति स्म। तरुणः सः अपि क्रूरमृगस्य अन्वेषणार्थम् उद्युक्तः अभवत्। सायंपर्यन्तम् अरण्ये अटित्वा अन्वेषणं कृत्वा सः ज्ञातवान् यत् स च क्रूरमृगः निर्झरिण्याः तीरे स्थिते महागुल्मे निलीय निवसति इति।

वीरबाहुः विना शब्दं समीपस्थं वृक्षम् आरुह्य तं मृगं परीक्षादृष्ट्या दृष्टवान्। तस्य मृगस्य आकारं दृष्टवतः तस्य महत् आश्चर्यम्। यतः तस्य मृगस्य मुखं केसरयुतं सत् सिंहस्य इव आसीत्। अवशिष्टं शरीरं तु पट्टिकाभिः युक्तं सत् व्याघ्रस्य इव दृश्यते स्म। तादृशः उभयविधलक्षणयुक्तः मृगः इतः पूर्वं तेन न दृष्टः आसीत्, न वा श्रुतः





आसीत् अपि।

क्रूरमृगम् उद्दिश्य बाणप्रयोगः करणीयः उत शूलं प्रयोक्तव्यम् इति यावत् वीरबाहुः चिन्तयन् आसीत् तावता तेन मृगेण वीरबाहुः दृष्टः एव। सः विचित्रं गर्जनं कुर्वन् गुल्म तः बहिः आगत्य वृक्षमूले अतिष्ठत्। 'एषः एव सुसमयः' इति आलोच्य वीरबाहुः मृगं लक्ष्यीकृत्य बाणं प्रयुक्तवान्।

बाणप्रहारेण तीव्रं व्रणितः सः क्रूरमृगः शाखायाम् उपविष्टं वीरबाहुं ग्रहीतुम् उपरि उत्प्लवनम् अकरोत्। तदा वीरबाहुः मृगस्य कण्ठं लक्ष्यीकृत्य शूलं प्रयुक्तवान्।वीरबाहोः बाणप्रयोगः व्यर्थः न जातः।

शूलप्रहारेण अधः पतितः क्रूरमृगः गुल्मम् उद्दिश्य धावितुम् उद्युक्तः। किन्तु वीरबाहुः झटिति वृक्षात् अधः आगत्य तथा बाणान् प्रयुक्तवान्, येन सः क्रूरमृगः वेदनया क्रन्दनं कुर्वन् अधः पतित्वा पादान् इतस्ततः चालयन् प्राणान् अत्यजत्।

प्रातःकाले शबरजनाः तत्र आगताः। मृतं विचित्रं मृगं दृष्ट्वा ते सर्वे आश्चर्यचकिताः। अस्माकं नायकस्य पुत्रः वीरबाहुः एव एतं मृगं मारितवान् इति, अचिरात् एव सः राजकुमारीं परिणीय अर्धस्य राज्यस्य उत्तराधिकारी भविष्यति इति च ते नितरां सन्तुष्टाः।

राज्ञा पद्मप्रियेण अपि ज्ञातं यत् कश्चन शूरः शबरयुवकः क्रूरमृगं मारितवान् इति। वार्ताश्रवणेन सः क्षणकालं सन्तुष्टः, किन्तु अनन्तरक्षणे एव तस्य मुखे विषादच्छाया आगता। यतः सः शबरयुवकः कृष्णवर्णीयः अक्षरानभिज्ञश्च। एतादृशम् अटविकं जामातरं कर्तुं न इच्छति राजा।

राज्ञः विचारः आसीत् यत् मम घोषणां श्रुत्वा कश्चन शूरः राजकुमारः आगत्य क्रूरमृगं मारयेत् इति। किन्तु दैववैपरीत्येन कश्चन अटविकः अनक्षरज्ञः युवकः तत् कार्यं साधितवान् आसीत्।

अग्रे किं करणीयम् इति विषये राजा मन्त्रिणा पुत्र्या च सह समालोचनं कृतवान्। मन्त्री राजकुमारी चापि अत्र असहायौ एव। तयोः बुद्धिः अपि मार्गं सूचयितुम् असमर्था एव।

"तात! क्रूरमृगं मारितवन्तं तं शबरयुवकं

भवान् वदतु यत् केवलम् अर्धराज्यमात्रं दीयते इति" इति उक्तवती राजकुमारी विवेकवती।

राजकुमार्याः विचारं समर्थयन् उक्तवान् मन्त्री– "आं श्रीमन्। इदानीम् एवं करणम् एव उचितम्। अर्धराज्यप्राप्तिमात्रेण एव सः सन्तुष्टः भवेत्। किन्तु तस्य मुखात् अस्माभिः वाचनीयं यत् राजकुमारीं परिणेतुम् अहम् अयोग्यः इत्यतः तस्याः परिणयं स्वयं निराकृतवान् अस्मि इति। अस्माभिः वचनभङ्गः कृतः इति अपख्यातिः न भवेत्" इति।

एषा सूचना राज्ञे अरोचत। राजा वीरबाहुम् आहूय विशेषतः सत्कृत्य गुप्तमन्दिरे वसतिव्यवस्थां कृतवान्। मन्त्रिणा विवेकवत्या च सह गत्वा स्वस्य आशयं निवेदितवान् च।

वीरबाहुः क्षणकालम् आलोच्य– "प्रभो, अर्धं राज्यं प्राप्तव्यम् इति इच्छा नास्ति मम। वस्तुतः पुरस्कारप्राप्तीच्छया मया स च क्रूरमृगः न मारितः। अपि तु देशहितं चिन्तयता मया प्रजानां कष्टस्य निवारणार्थं सः मृगः मारितः। अहं प्रजाः स्वयं वदामि यत् मया एव राज्यप्राप्तिः युवराज्ञीपरिणयः च स्वयं निराकृतः इति। अतः काऽपि चिन्ता मास्तु भवतः" इति उक्त्वा वेगेन गन्तुम् उद्युक्तः।

'समस्या विनायासं परिहृता' इति राजा मन्त्री च सन्तुष्टौ। किन्तु युवराज्ञी विवेकवती



वीरबाहोः गमनं निवार्य पितरम् उक्तवती– "तात! भवान् एतस्मै शबरयुवकाय अर्धं राज्यं ददातु वा मा वा, अहं तु एतम् एव परिणेष्यामि। सम्यक् विचिन्त्य एषः विवाहः अनुमन्तव्यः भवता" इति।

एतत् श्रुत्वा राजा पद्मप्रियः मन्त्री च आश्चर्यचकितौ। राजकुमारी एतादृशं निर्णयं कुर्यात् इति तु ताभ्यां न निरीक्षितम् आसीत्। राजकुले जाता एषा अटविकम् अनक्षरज्ञं युवकं परिणेतुं सिद्धा जाता यत् तत् तु तयोः दृष्ट्या आघातकरम् आसीत्। तयोः मुखतः किमपि वचनं न निर्गतम्।

वेतालः एवं कथां समाप्य अवदत्– "वीरबाहुः पुरस्कारवार्तां श्रुत्वा एव क्रूरमृगस्य मारणे उद्युक्तः जातः।

पुरस्कारप्राप्त्यर्थम् एव राजमन्दिरम् आगतवान् अपि। किन्तु युवराज्ञी परिणेतुं न शक्या इति यदा ज्ञातं तदा असत्यम् उक्तवान् यत् पुरस्कारप्राप्तीच्छया न, अपि तु कर्तव्यपालनदृष्ट्या इति। एतेन सिद्धं यत् सः असत्यवादी इति। भीरुः इव सः प्राप्तम् अर्धं राज्यं किमर्थं परित्यक्तवान्? राजकुमारी विवेकवती अटविकं निरक्षरं वीरबाहुं परिणेतुं किमर्थं सिद्धा जाता? सा एव खलु पूर्वं निराकरणं प्रदर्शितवती आसीत्? राजा वचनभङ्गं कृतवान् इति तु सुस्पष्टम् एव खलु? मम एतेषां प्रश्नानां योग्यम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– ''राजा वचनभङ्गं कृतवान् इत्यत्र नास्ति सन्देहः। अपख्यातितः आत्मनः रक्षणार्थं सः वीरबाहुमुखात् 'अहम् एव स्वयं युवराज्ञ्याः परिणयं निराकृतवान्' इति वाचयितुम् अपि प्रयत्नं कृतवान्। एतादृशात् राजतः अर्धराज्यस्य स्वीकारः उचितः न स्यात् इति आलोच्य वीरबाहुः राज्यस्वीकारं निराकृतवान्। पुरस्कार-प्राप्तीच्छया आगत्य अपि तेन एतत् असत्यं यत् उक्तं तत् तस्य विवेकिताम् एव प्रदर्शयति। विवेकवती पूर्वं वीरबाहुं परिणेतुं सिद्धा न आसीत्। तत्र कारणं तस्य हीनकुलत्वम् अनक्षरत्वं च। किन्तु अनन्तरं वीरबाहुना या विवेकिता प्रदर्शिता, राज्यस्वीकारं निराकुर्वता या त्यागबुद्धिः प्रदर्शिता तेन विवेकवती वीरबाहोः संस्कारयुतत्वं ज्ञातवती। अतः सा तं परिणेतुं सिद्धा जाता। 'गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः' इति एतत् नीतिवचनं स्मरन्ती विवेकवती स्वनाम्नः अनुगुणम् एव व्यवहृतवती'' इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।





# पुष्पकविमानम्

दानशूरपुरं पूर्वं धीरसिंहः नाम राजा पालयति स्म। कदाचित् सः राजोद्याने शिलासने उपविश्य प्रमुखैः राजोद्योगिभिः सह वार्तालापं कुर्वन् आसीत्।

वार्तालापमध्ये सः अकस्मात् आकाशं पश्यन्– "तत्र पश्यन्तु। अहो विमानम्! विमाने प्रायः गन्धर्वाः सन्ति इति भाति" इति उक्तवान्।

तदा चन्द्रकेतुः नाम उद्योगी आकाशं पश्यन् उक्तवान्– "अहो परमाश्चर्यम्! भवतः दृष्टिशक्तिः नितरां तीक्ष्णा। तत् पुष्पकविमानं स्यात्। पुष्पकविमाने स्थिताः गन्धर्वाः, यक्षाः, देवताः वा स्युः" इति।

"सत्यम्। तत् पुष्पकविमानम् एव। विमानस्थः तु गन्धर्वः एव" इति उक्तवान् सूर्यकान्तः नाम अपरः उद्योगी।

एवं सर्वे उद्योगिनः राज्ञः वचनं समर्थितवन्तः। "नाविष्णुः पृथिवीपतिः इति प्राचीनवचनम्। राजा देवांशसम्भूतः इत्यतः तत् विमानं द्रष्टुं शक्तवान्। तावदेव न, अनुग्रहबुद्ध्या पामरेभ्यः अस्मभ्यम् अपि प्रदर्शितवान्" इति राज्ञः प्रशंसाम् अपि कृतवन्तः ते।

तत्र उपविष्टेषु राजपुरोहितस्य पुत्रः पद्मनेत्रः अपि अन्यतमः। सः तक्षशिलायां स्थित्वा उन्नतविद्याभ्यासं समाप्य आगतवान् आसीत्। सर्वेषु राज्ञः प्रशंसां कुर्वत्सु, पद्मनेत्रः मौनं स्थितवान् आसीत्।

एतत् परिशील्य राजा धीरसिंहः मन्दहासपूर्वकं पृष्टवान्– "पद्मनेत्र! किमर्थं मौनव्रतम् आश्रितम्? सर्वैः दृष्टं विमानं भवता न दृष्टं वा?" इति।

"प्रभो, एतस्य उत्तरं भवतः अप्रियं स्यात्। अतः अभयं दत्तं चेत् अहम् उत्तरं वदेयम्"

इति उक्तवान् पद्मनेत्रः।

"काऽपि भीतिः मास्तु। निस्सङ्कोचं वदतु तावत्" इति उक्तवान् राजा धीरसिंहः।

"प्रभो, आकाशे किमपि विमानं न गतम्। विमानं गतम् इति तु भ्रमः एव" इति उक्तवान् पद्मनेत्रः।

"अत्रत्यैः सर्वैः विमानं दृष्टम् अस्ति। भवान् तु वदति– भ्रमः इति। भवतः दृष्टिदोषः स्यात् वा?" इति पृष्टवान् धीरसिंहः।

तदा पद्मनेत्रः विनयेन उक्तवान्– "प्रभो, मम दृष्टिदोषः कोऽपि नास्ति। वस्तुतः पुष्पकविमानं गन्धर्वसञ्चारः इत्यादयः काल्पनिकाः विषयाः। पामराणां तोषणार्थं ते विषयाः पुराणेषु प्रस्तूयन्ते। भवता बुद्ध्या भ्रमेण वा पुष्पकविमानं दृष्टम् इति उक्तम्। तदा अत्रत्याः एते भवतः प्रीतिं सम्पादयितुम् इच्छन्तः, भवान् देवांशसम्भूतः महात्मा इति, भवान् आश्रितानुग्राहकः इति च भवतः प्रशंसां कृतवन्तः। 'वन्ध्यासुतः दृष्टः' इति भवान् वदतु। तदा भवत्प्रीत्यर्थम् आश्रिताः वदन्ति– 'आम्, अस्माभिः अपि सः दृष्टः' इति। स्वार्थाभिलाषुको लोकः" इति।

तदा धीरसिंहः उक्तवान्– "साधु, पद्मनेत्र साधु। अप्रियम् अपि विषयं सधैर्यं वदतः भवतः स्पष्टवादिता नितरां प्रशंसार्हा। देशे यद्यत् प्रचलति तत्सर्वं ज्ञात्वा अप्रियम् अपि सधैर्यं वक्तुं समर्थः कश्चन साहाय्यकः मम आवश्यकः आसीत्। अतः अहम् अत्रत्यानां परीक्षार्थं 'पुष्पकविमानं दृष्टं मया' इति उक्तवान्। मया मिथ्या उक्ता इति अत्र कैश्चित् वा ज्ञातं स्यात् एव। ते अपि मम प्रीतिं सम्पादयितुं, जानन्तः अपि मिथ्याम् उक्तवन्तः। पद्मनेत्रेण एकेन एव सधैर्यं व्यवहृतम्। स्पष्टवादिता प्रदर्शिता। एतादृशः एव मम साहाय्यकः भवितुम् अर्हति। एतादृशः अस्ति चेदेव अहं मम शासनस्य लोपदोषान् अपि ज्ञातुं शक्नोमि। अतः इतः परं पद्मनेत्रः मम साहाय्यकपदम् अलङ्कृत्य मम साहाय्यं करिष्यति" इति।



# चन्दमामानुबन्धः–४०



**अस्मद्देशीयाः पशुपक्षिणः–**

## व्याघ्रः

गम्भीरस्वभावाः महाकाराः व्याघ्राः पूर्वं बङ्गालराज्यस्थे सुन्दरवने अधिकतया आसन्। सिंहः मृगराजः इति ख्यातः। तथा चेत् व्याघ्रः राजतुल्यः माण्डलिकः वा। पूर्वं राजानः मृगयाविनोदसमये व्याघ्रान् मारयन्ति स्म। चर्मादिनिमित्तम् अपि जनैः व्याघ्राः मार्यन्ते। एवं मारणेन व्याघ्रसङ्ख्यायां महान् ह्रासः जातः। पूर्वम् अस्मद्देशे ४०,००० अधिकाः व्याघ्राः आसन् इति श्रूयते। किन्तु १९७२ तमा गणतिः सूचयति यत् तत्काले २,००० व्याघ्राः केवलम् आसन् इति। 'एवं चेत् अचिरात् एव समग्रा व्याघ्रसन्ततिः विनष्टा स्यात्' इति आलोच्य सर्वकारेण व्याघ्रसन्ततिरक्षणार्थं विविधाः क्रमाः आश्रिताः। व्याघ्रः 'राष्ट्रियः मृगः' इति घोषितम्। इदानीं देशे विविधेषु अभयारण्येषु प्राणिसङ्ग्रहालयेषु च आहत्य ४,००० व्याघ्राः स्युः।

मार्जारकुलीयः व्याघ्रः सर्वविधान् अपि अरण्यवासिनः मृगान् खादति। तथापि हरिणः वन्यसूकरः च तस्य प्रियः आहारः। शिरस्तः पुच्छान्तं यावत् व्याघ्रस्य दैर्घ्यं ८-९ द्वादशाङ्गुलं भवति। भारश्च २०० किलो स्यात्। व्याघ्रः प्रायः १५-२० वर्षाणि जीवति।



# बालः वेणुविद्वान्

मद्रासनगरे सद्यःकाले प्रवृत्ते कस्मिंश्चित् सङ्गीतोत्सवे द्वादशवर्षीयः शशाङ्कः नाम बालः घण्टाद्वयं यावत् वेणुवादनेन श्रोतॄन् आनन्दसागरे निमज्ज्य आश्चर्यशिखरं नीतवान्। सङ्गीतोत्सवे सायं ६-९ वादनयोः अभ्यन्तरे प्रख्यातानां विदुषां गानं वादनं वा भवति प्रायः। एतादृशः प्रमुखः समयः द्वादशवर्षीयस्य शशाङ्कस्य वाद्यवादनार्थं निश्चितः आसीत्। व्यवस्थापकानां निरीक्षां सफलीकुर्वन् शशाङ्कः न केवलं श्रोतॄन् वशीकृतवान्, अपि तु विमर्शकानां साधुवादम् अपि प्राप्तवान्।

शैशवे एव सङ्गीते विशेषाभिरुचिः आसीत् शशाङ्कस्य। शशाङ्कस्य पिता सुब्रह्मण्यं वेणुगानविद्वान्। यदा सः रागालापनं करोति स्म तदा शशाङ्कः आसक्त्या तत् शृणोति स्म। शिशुः सः कांश्चन रागान् श्रुत्वा हसति स्म। पुनः कांश्चन श्रुत्वा रोदिति स्म। एवं त्रिवर्षवयसि एव तेन सप्ततिः रागाः अभिज्ञाताः आसन्। शिशोः सङ्गीतासक्तिं जानन् पिता योग्यं सङ्गीशिक्षणम् आरब्धवान्। 'पुत्रः वायलिन्वाद्यवादने निपुणः स्यात्' इति पितुः आशयः आसीत्। किन्तु शशाङ्कः तु पितुः वेणुम् एव मुखकमले निवेशयति स्म। वेणुवादनसमये पिता यथा अङ्गुलीः चालयति तथैव बालः शशाङ्कः अनुकुर्वन् वेणुवादनम् अभ्यस्तवान्।

शशाङ्कस्य सङ्गीतशिक्षणम् उत्तमं स्यात् इति उद्देशेन तदीयं कुटुम्बं बेङ्गलूरुतः मद्रासनगरम् अगच्छत्। पुत्रनिमित्तं पिता महाविद्यालयस्य अध्यापकवृत्तिम् अपि परित्यक्तवान्।

शशाङ्कः आस्ट्रेलियादेशस्य अडिलेड्नगरे स्वदशमे वयसि ऐदम्प्राथम्येन रङ्गप्रवेशं कृतवान्। ततः प्रत्यागमनसमये मलेशियादेशे सिङ्गपूरदेशे चापि तस्य सङ्गीतगोष्ठी प्रवृत्ता। भारते तु १९९० तमे वर्षे सप्टम्बरमासे मुम्बयीनगरस्य सुविख्याते सभाभवने तस्य प्रथमा सङ्गीतगोष्ठी प्रवृत्ता। अनन्तरं बह्व्यः सङ्गीतसंस्थाः सांस्कृतिकसंस्थाः च स्वकार्यक्रमार्थं तं निमन्त्रितवत्यः। वेणुवादनक्षेत्रे शशाङ्कः प्रौढायते। किन्तु अन्येषु विषयेषु तस्य बालप्रवृत्तिः अस्ति एव। शालागमनं तस्मै विशेषतः न रोचते। कदाचित् सः कोपेन मौनम् आश्रित्य निष्क्रियः भवति। तदा पिता प्रीत्या तं लालयति, पुनः कदाचित् कोपेन तर्जयति अपि।

समवयस्कैः बालैः सह क्रीडने शशाङ्कस्य यावती आसक्तिः ततोऽपि द्विगुणिता आसक्तिः भगिनीभिः सह क्रीडने। समयावकाशः प्राप्तः चेत् सः क्रीडने ध्वनिमुद्रिकाश्रवणे च निरतः भवति।

आश्चर्यंकरः विषयः नाम शशाङ्केन यत् सम्पाद्यते तदेव आधारीकृत्य जीवति तदीयं कुटुम्बम्!

सङ्गीतशास्त्रनिपुणाः बहवः अस्माभिः श्रुताः स्युः, दृष्टाः स्युः अपि। किन्तु शशाङ्कसदृशः बालः वेणुविद्वान् प्रायः अश्रुतपूर्वः। दैवानुग्रहः सततपरिश्रमः च इतः परम् अपि यदि सततं स्यात् तर्हि शशाङ्कः सुविख्यातः सङ्गीतज्ञः भविष्यति।

# भवन्तः जानन्ति वा?

१. ऐक्यराज्यसमितेः प्रथमः प्रधानकार्यदर्शी कः?
२. 'कामन्वेल्त् दिनं' कदा आचर्यते?
३. जवहरलालनेहरूवर्येण कस्मिन् कारागारे तिष्ठता 'डिस्कवरी आफ् इण्डिया'नामकः ग्रन्थः लिखितः?
४. 'दि लेडी वित् दि ल्याम्फ्' इति ख्याता महिला का?
५. मोहम्मद्चक्रवर्तिनः मातापितरौ कौ?
६. 'डयमानस्थालिका' दृष्टा इति वार्ता सर्वप्रथमं कदा श्रुता?
७. येसुक्रिस्तवर्यः यदा शूलम् आरोप्यमाणः आसीत् तदा सः स्वशिष्यम् आहूय उक्तवान् यत् मम माता मेरी पोषणीया भवता इति। तस्य शिष्यस्य नाम किम्?
८. 'ओल्ड् टेस्टमेण्ट्' ग्रन्थे कः नोवावर्यस्य पितामहः इति निर्दिष्टः?
९. चन्द्रग्रहं सर्वप्रथमं गतस्य मानवसहितस्य उपग्रहस्य नाम किम्?
१०. मावो त्से तुङ्गवर्येण 'पीपल्स् रिपब्लिक् आफ् चैना'नामकः पक्षः कदा स्थापितः?
११. केन ग्रन्थकर्त्रा 'अट्लाण्टिस्' स्वग्रन्थे वर्णितः?
१२. सर्वप्रथमम् आकाशप्रयाणं कृतवन्तौ रैट्सहोदरौ कया वृत्त्या जीवतः स्म?
१३. इटलीदेशीया काचित् वैद्या स्ववृत्तिभिन्ने क्षेत्रे प्रसिद्धिं गता। सा का?
१४. अमेरिकादेशीया सा नटी का, यस्याः च चित्रं ऐदम्प्राथम्येन मूल्याङ्के चित्रितम् आसीत्?
१५. स च देशः कः, यत्र क्रिकेट् राष्ट्रियक्रीडा अस्ति?

## उत्तराणि

१. ट्रिग्वेली।
२. 'मे'मासे २४ दिनाङ्के।
३. अहमदनगरदुर्गकारागारे।
४. फ्लारेन्स् नैटिङ्गेल्।
५. अब्दुल्ला अमीना च।
६. १९४० तमे वर्षे जून्-२४ तमे दिनाङ्के।
७. जान् इति।
८. मेथुसेला।
९. लूना-२ इति। एषः रशियादेशेन प्रेषितः—१९५९ तमे वर्षे सप्टेम्बर्मासे १३ दिनाङ्के।
१०. १९४९ तमे वर्षे सप्टेम्बर्मासे २१ तमे दिनाङ्के। सोवियत्देशेन एतस्य सर्वप्रथमम् अङ्गीकारः कृतः।
११. ग्रीकृतत्त्वज्ञानिना प्लेटोवर्येण।
१२. एकः द्विचक्रिकापणं चालयति स्म। अपरश्च यन्त्रागारम्।
१३. मेरिया माण्टेस्सोरी। विद्याक्षेत्रे एतया प्रसिद्धिः प्राप्ता।
१४. ग्रेस् केल्ली। 'दि कण्ट्री गर्ल्'नामके चित्रे कृतस्य अभिनयस्य निमित्तं प्राप्तम् 'आस्कर्'प्रशस्तिं मनसि निधाय एवं कृतम्।
१५. आस्ट्रेलिया।



## दयार्द्रः बालः

एषु दिनेषु उत्तरप्रदेशराज्ये भूकम्पकारणतः महती हानिः सञ्जाता। भूकम्पपरिहारनिध्यर्थं विविधाः देशाः, धनिकाः चापि प्रभूतं धनं प्रेषितवन्तः। तथापि चीनादेशतः केनचित् प्रेषितानि ६०० रूप्यकाणि तु अतिविशिष्टानि। यतः तानि दशवर्षीयेण षाङ्घेयू यान्से घी नामकेन बालकेन प्रेषितानि। भूकम्पकारणतः अनाथत्वं प्राप्तवतः बालान् दूरदर्शने दृष्ट्वा दयार्द्रः सः पितुः द्वारा बीजीङ्गनगरस्य भारतीयदूतावासकार्यालयं प्रति एतत् धनं प्रेषितवान्। दूरदर्शनधारावाहिन्यां कृतस्य अभिनयस्य निमित्तं यत् पारिश्रमिकं धनं प्राप्तं तत्र अर्धम् एवम् अर्पितवान् सः। अवशिष्टार्धं तु सः इतः पूर्वम् एव चीनादेशीयेभ्यः प्रवाहपीडितेभ्यः दत्तवान् आसीत्।

# र स वा र्ता:

## नौकया महासागरतरणम्

'क्षणं दिनायते स्म। दिनं च युगायते स्म' इति उक्तवान् फ्रान्स्देशीयः जेराल्ड् डि. अबोक्लि, यश्च सामान्यनौकया फेसिफिक्महासागरं तीर्णवान्। एतस्य वयः ४१ वर्षाणि। अष्टमीटर्दीर्घया नौकया जपान् पूर्वतीरतः जुलैमासस्य ११ दिनाङ्के निर्गतः एषः १०,००० कि.मी. दूरं १३३ दिनेषु क्रमित्वा नवेम्बर्मासस्य २१ तमे दिनाङ्के अमेरिकीय–ओरिगान् पोर्टल्याण्ड्समीपस्थम् इल्वाकीप्रदेशं प्राप्तवान्। प्राप्तिसमये शारीरकतया नितरां श्रान्तः अपि सः मानसिकतया महोत्साही एव दृश्यते स्म।





# वहनात् भारज्ञानम्

हरिणपुरनामके ग्रामे गोवर्धनः नाम कश्चन धनिकः निवसति स्म। तस्य बहुविधं वाणिज्यम् आसीत्। अतः बहवः कर्मकराः अपि आसन्। गोवर्धनः कदापि कर्मकराणां कष्ट-दुःखादिविषयं न चिन्तयति। मध्याह्ने उग्रातपे कर्मकराः पिपासया बाधिताः चेदपि जलपानार्थम् अनुमतिं न ददाति सः। जलं पातुं गतं चेत् समयः व्यर्थः भवति इति तस्य आशयः। एतादृशानि कष्टानि अपि कर्मकाराः मौनं सहन्ते स्म।

एतत्सर्वं दृष्ट्वा गोवर्धनस्य पत्नी सुजाता पुत्रः गिरिधरः च नितरां दुःखितौ भवतः। गोवर्धनस्य मनसः परिवर्तनार्थं तौ बहुधा प्रयत्नं कृतवन्तौ। किन्तु तयोः सर्वे यत्नाः विफलाः। तौ अपि निराशया मौनम् आश्रितवन्तौ।

गोवर्धनस्य एकं शकटम् आसीत्। नगरादीन् प्रति गमनागमनार्थं बहुधा तस्य उपयोगं करोति स्म गोवर्धनः। शकटवाहकम् अश्वं महत्या प्रीत्या पश्यति स्म सः। किन्तु शकटचालकं बादरं तु अन्यकर्मकरान् इव एव उपेक्षया एव पश्यति। बादरः वृद्धः, तथापि गोवर्धनः तस्मिन् दयां न प्रदर्शयति।

हरिणपुरतः नगरं प्रति गमनसमये किञ्चन अरण्यं क्रमणीयं भवति स्म। तस्मिन् अरण्ये क्रूराः हिंस्रपशवः कुख्याताः लुण्ठाकाः च निवसन्ति स्म। अतः रात्रिसमये तेन् मार्गेण गन्तुं कोऽपि धैर्यं न प्राप्नोति स्म।

कदाचित् बन्धुगृहस्य विवाहार्थं पत्नीपुत्राभ्यां सह शकटे उपविश्य गोवर्धनः नगरं प्रति प्रस्थितवान्। पत्नी सुजाता आत्मना सह बहूनि वस्तूनि स्वीकृतवती आसीत्। पुत्रः गिरिधरः अपि वाणिज्यवस्तुयुक्तं पेटिकाद्वयं शकटे




स्थापितवान् आसीत्। प्रातः गृहात् प्रस्थिताः ते मध्याह्नसमये अरण्यमार्गं प्राप्तवन्तः।

अत्रान्तरे शकटचालकः बादरः हृदयं गृहीत्वा वेदनया क्रन्दमानः शकटे पृष्ठतः पतितवान्। खलीनं तस्य हस्तच्युतं जातम्। अतः स्वेच्छया धावन् अश्वः शकटात् पृथग्भूय कुत्रापि अधावत्। अश्वरहितं शकटं वृक्षेण घट्टितं सत् अतिष्ठत्। शकटे उपविष्टाः गोवर्धनः, सुजाता गिरिधरः च शकटात् अवतीर्णाः।

"दैवानुग्रहात् वयं महतः अपायात् कथमपि रक्षिताः अभवाम" इति दीर्घं निःश्वसन् उक्तवान् गोवर्धनः।

"इदानीं किं करणीयम् अस्माभिः?" इति पृष्टवान् गिरिधरः।

"किम् अन्यत् कर्तुं शक्यते? त्रयः अपि भारं विभज्य वहन्तः गच्छाम। इदानीं न अन्यः मार्गः" इति उक्तवती सुजाता।

त्रयः अपि क्रूरपशुतः लुण्ठाकतः च नितरां भीताः आसन्। अतः भारवहनं मौनम् अङ्गीकृत्य ते भारं विभज्य स्वीकृतवन्तः। त्वरया ततः निर्गतवन्तः। भीतिकारणतः त्वराकारणतः च केनाऽपि बादरविषये न चिन्तितम् एव।

किञ्चिद्दूरं गमनानन्तरं सुजाता बादरं स्मृतवती। सा खेदेन उक्तवती– "परमस्वार्थिनः वयं बादरं तत्रैव परित्यज्य आगताः। न जाने, घोरे अरण्ये तस्य का गतिः जाता स्यात् इति" इति।

"अलं व्यर्थचिन्तया। नगरं प्राप्य कञ्चित् तत्र प्रेषयिष्यामः। तदस्तु, बादरः कथञ्चित् उत्थाय नगरं गृहं वा प्राप्नुयात्। अश्वस्य शकटस्य च का गतिः? तयोः मूल्यं किं न्यूनम्?" इति वदन् कोपं प्रदर्शितवान् गोवर्धनः।

क्रोशार्धं यावत् गमनसमये एव तैः सम्यक् ज्ञातं यत् भारवहने कीदृशः क्लेशः अस्ति इति। घोरे आतपे वृक्षच्छायारहिते मार्गे गच्छन्तः आसन् ते। त्रयः अपि नितरां श्रान्ताः सन्ति। तत्रापि महतीं पेटिकां वहतः गोवर्धनस्य तु शोचनीया आवस्था। एकं पदम् अपि अग्रे गन्तुम् अशक्नुवन् सः पेटिकाम् अवतार्य दीर्घं निःश्वसन् पत्नीम् उक्तवान्–

''महती पिपासा! कण्ठः शुष्कः जातः। जलं ददातु किञ्चित्'' इति।

तदा सुजाता आश्चर्यं प्रकटयन्ती– ''जलपात्रम् अत्र कुत्र? तत्तु शकटे एव अवशिष्टम्'' इति उक्तवती।

''हा हन्त!'' इति खेदेन उक्तवान् गोवर्धनः। ग्रामे घोरातपे भारं वहन्तः कर्मकराः तेन स्मृताः। 'जलपानार्थम् अपि अनुमतिम् अयच्छन् अहं घोरं पापम् आचरितवान्' इति चिन्तितवान् गोवर्धनः। उरोवेदनया पीडितः सन् पतितः बादरः अपि तेन स्मृतः। 'वृद्धम्, अस्वस्थम्, एकाकिनं तं घोरे अरण्ये परित्यजतः मम अहो निर्दयता! धिक् माम्'' इति आत्मानं निन्दितवान् गोवर्धनः।

सः झटिति उत्थाय पृष्ठतः परिवृत्य– ''अहं शकटसमीपं गत्वा आगमिष्यामि। भवन्तौ अत्रैव तिष्ठताम्'' इति उक्त्वा अग्रे गन्तुम् उद्युक्तः।

तदा गिरिधरः उत्थाय– ''जलम् आनेतुं किल गम्यते भवता? अहं गत्वा आनयामि तावत्'' इति उक्तवान्।

तदा गिरिधरस्य गमनं निराकुर्वन् उक्तवान् गोवर्धनः– ''अहं जलपात्रार्थं न, उरोवेदनया पतितस्य एकाकिनः बादरस्य निमित्तं गच्छन् अस्मि। वयम् एव अश्वम् अन्विष्य शकटे संयोज्य बादरं नगरं नीत्वा वैद्याय दर्शयाम। भवान् अपि मया सह आगच्छतु'' इति।

गोवर्धनस्य मुखतः निर्गतम् एतादृशं वचनं



श्रुत्वा सुजाता गिरिधरः च आश्चर्येण तदीयं मुखं पश्यतः। तदा गोवर्धनः पुनः उक्तवान्– "अद्यावधि अहं कर्मकराणां विषये निर्दयं व्यवहारं प्रदर्शयामि स्म। अद्य मया ज्ञातं यत् भारवहनं कियत् क्लेशाकरम् इति। स्वानुभवः एव श्रेष्ठः गुरुः इति अभिज्ञाः वदन्ति। मया अद्य स्वानुभवात् कर्मकराणां क्लेशः अवगतः" इति।

अत्रान्तरे अश्वस्य खुरपुटध्वनिः श्रुतः, हेषारवः अपि। शकटं चालयन् बादरः तत्र उपस्थितः। गोवर्धनः झटिति शकटसमीपं गत्वा पृष्टवान्– "अहो बादर! उरोवेदनया पीडितः भवान् पुनरपि एतस्मिन् क्लेशे आत्मानं पातितवान्? अश्वः कथम् अन्विष्टः भवता? वेदनायां सत्याम् अपि कथं शकटं चालितवान्?" इति।

"श्रीमन्, गतेभ्यः षोडशवर्षेभ्यः एषा वेदना मां पीडयन्ती अस्ति। अतः एषा वेदना अदृष्टपूर्वा न, वेदनासहनपूर्वकं कार्यकरणम् अपि अज्ञातं न। अश्वः तु अल्पे एव काले स्वयं शकटसमीपम् आगतः। तदस्तु, मत्कारणतः भवता भारः वोढव्यः आपतितः। अहं क्षन्तव्यः कृपया" इति दैन्येन उक्तवान् बादरः।

एतत् श्रुतवतः गोवर्धनस्य मुखं प्रसन्नं जातम्। सः प्रीत्या बादरस्य स्कन्धे हस्तं स्थापयित्वा तं सन्तोष्य जलपात्रस्थं जलं पीत्वा उक्तवान्– "क्षमायाचना करणीया नास्ति। यतः भवता कोऽपि दोषः न कृतः। यत् प्रवृत्तं तत् हिताय एव। तत्कारणतः एव मया ज्ञातं यत् कर्मकराणां विषये निर्दयव्यवहारः न करणीयः इति। भारवहनकष्टं वोढा एव जानीयात्, न तु दूरतः द्रष्टा। एवं खलु?" इति।

अनन्तरं गोवर्धनः सुजाता गिरिधरश्चापि शकटे उपविश्य नगरं प्राप्तवन्तः।

एतदनन्तरं गोवर्धनस्य व्यवहारे महत् परिवर्तनं दृष्टम्। कर्मकरान् पुत्रवत् पश्यति सः। अतः कर्मकराः अपि तम् आदरेण पश्यन्तः सन्तोषेण प्रशंसां कुर्वन्ति स्म।



# हिंसा

अरण्यसमीपस्थे लघुग्रामे कश्चन कृषिकः निवसति स्म। सः कदाचित् सायङ्कालपर्यन्तम् अपि क्षेत्रे कार्यं कृत्वा गृहं प्रत्यागच्छन् आसीत्। मध्ये मार्गं तेन व्याघ्रगर्जनं श्रुतम्। कृषिकः तस्यां दिशि परिवृत्य दृष्टवान्। ततः अनतिदूरे वृक्षयोः मध्ये बद्धः इव स्थितः व्याघ्रः ततः विमोचनं प्राप्तुम् इच्छन् गर्जनं कुर्वन् आसीत्।

'व्याघ्रः यस्मिन् कस्मिंश्चित् क्षणे ततः विमोचनं प्राप्य मम उपरि आक्रमणं कर्तुम् अर्हति। अतः कथमपि एतस्य मारणम् एव वरम्' इति आलोच्य कृषिकः व्याघ्रसमीपं गतवान्। व्याघ्रस्य पुरतः गन्तुं तु धैर्यं नास्ति। अतः कृषिकः पृष्ठतः गत्वा लवित्रेण प्रहर्तुम् उद्युक्तः। तावता व्याघ्रः मानवस्य आगमनं ज्ञात्वा उच्चैः गर्जनं कुर्वन् पृष्ठभागस्थाभ्यां पादाभ्यां प्रहर्तुं प्रयत्नम् अकरोत्। एतस्मात् भीतस्य कृषिकस्य हस्तात् लवित्रं पतितम्। भीतः सः झटिति अग्रे गत्वा व्याघ्रस्य पादौ दृढं गृहीतवान्। इदानीम् अनतिदूरे पतितं लवित्रं स्वीकर्तुं न शक्नोति सः।

अग्रे किं करणीयम् इति यावत् कृषिकः चिन्तयन् आसीत् तावता तेन मार्गेण कश्चन संन्यासी तत्र आगतः। कृषिकः संन्यासिनम् उक्तवान्– "श्रीमन्! मम परिस्थितिः दृष्टा खलु भवता? अहं व्याघ्रस्य पादौ दृढं गृहीतवान् अस्मि। भवान् कृपया तीक्ष्णम् एतत् लवित्रं स्वीकृत्य व्याघ्रं मारयतु" इति।

"शान्तं पापम्। शान्तं पापम्। संन्यासिना मया हिंसा न करणीया। व्याघ्रं न मारयामि अहम्" इति उक्तवान् संन्यासी।

"तर्हि एतस्य पादौ भवान् गृह्णातु। मम उपकारं करोतु। अग्रे यत् करणीयं तत् अहं करोमि" इति उक्तवान् कृषिकः।

संन्यासी एतत् अङ्गीकृत्य व्याघ्रस्य पादौ गृहीतवान्। कृषिकः तु लवित्रं स्वीकृत्य ततः निर्गन्तुम् उद्युक्तः। तदा संन्यासी पृष्टवान्– "भोः, व्याघ्रम् एवम् एव त्यक्त्वा गच्छन् अस्ति खलु?" इति।

तदा कृषिकः– "श्रीमन्! हिंसा न करणीया इति वचने ममापि विश्वासः आगतः अस्ति इदानीम्। अहं व्याघ्रं मारयामि चेत् साहाय्यं कृतवान् भवान् अपि पापभाक् भविष्यति। एतत् अहं न इच्छामि। व्याघ्रः अल्पे एव काले विमोचनं प्राप्य इतः निर्गमिष्यति। तदा भवान् अपि निर्गच्छतु" इति उक्त्वा स्वग्रामं गतवान्।





# पाठनकौशलम्

महाराजस्य यज्ञपालस्य द्वौ पुत्रौ। तयोः ज्येष्ठः श्रीधरः तीक्ष्णमतिः। कनिष्ठः विद्याधरः मन्दमतिः। उभौ अपि अभिन्ने गुरुकुले विद्याभ्यासं कुरुतः चेत् वरम् इति यज्ञपालस्य आशयः। अतः सः दण्डकारण्यस्थं सन्दीपमुनेः आश्रमं गतवान्।

सन्दीपमुनिः राज्ञः आशयं ज्ञात्वा उक्तवान्– "अहं तु वृद्धः सञ्जातः अस्मि। नूतनानां छात्राणां पाठने सामर्थ्यं नास्ति मम। मम द्वौ शिष्यौ राजधान्यां निवसतः। उभयोः अपि उत्तमा प्रसिद्धिः अस्ति। अतः भवता तौ दृष्टौ चेत् तयोः अन्यतरः भवतः मनोरथं सफलं कुर्यात्" इति।

राजा यज्ञपालः सन्दीपमुनेः शिष्ययोः अन्यतरं बृहस्पतिं दृष्ट्वा स्वस्य इच्छां निवेदितवान्। तदा बृहस्पतिः उक्तवान्– "साक्षात् देवेन्द्रः एव आज्ञापयति चेदपि अहं कमपि अपरीक्ष्य शिष्यत्वेन न स्वीकरोमि। मम शिष्यः तीक्ष्णमतिः स्यात्, सकृद्ग्राही च स्यात्" इति।

एतत् श्रुतवतः राज्ञः यज्ञपालस्य कोपः आगतः। तथापि सः आत्मानं निगृह्य मौनं ततः निर्गतवान्। सन्दीपमुनेः अपरं शिष्यं सुरेश्वरं दृष्ट्वा स्वस्य इच्छां निवेदितवान् राजा।

सुरेश्वरः सत्कारादीनाम् अनन्तरं राजानम् उक्तवान्– "प्रभो, वस्तुतः सः एव समर्थः गुरुः, यश्च मृत्पिण्डबुद्धिम् अपि शिष्यं बुद्धिमन्तं कर्तुं शक्नोति। अतः शिष्यस्वीकारसमये अहं कदापि परीक्षणं न करोमि। सर्वविधान् अपि शिष्यान् पाठयामि" इति।

राजा यज्ञपालः राजधानीं प्रतिगतवान्। मन्त्रिणम् आहूय द्विविधम् अपि स्वकीयम्

अनुभवं निवेद्य उक्तवान्– "मम राज्ये अहङ्कारिणः स्थितिः न भवेत्। अतः बृहस्पतेः अपमाननं दण्डनं च यथा भवेत् तथा कमपि मार्गं सूचयतु" इति।

तदा मन्त्री उक्तवान्– "आचार्याणां निमित्तं स्पर्धां व्यवस्थापयतु। तदा मृत्पिण्डबुद्धीनाम् अपि सम्यक् पाठयिता सुरेश्वरः एव जयं प्राप्स्यति। बृहस्पतेः पराजयः अपमाननं च भविष्यति। तदेव योग्यः दण्डः" इति।

राजा एतत् अङ्गीकृत्य स्पर्धाम् आयोजितवान्। किन्तु तस्यां स्पर्धायां बृहस्पतेः एव जयः अभवत्।

तदा राजा आश्चर्येण बृहस्पतिं पृष्टवान्– "पण्डितवर्य! यत्र विद्या तत्र अहङ्कारः न भवेत्। किन्तु भवतः तु महान् अहङ्कारः। किम् एतत् उचितम्?" इति।

तदा बृहस्पतिः राजानं विनयेन नमस्कृत्य उक्तवान्– "महाराज! अहङ्कारः पण्डितस्य भूषणं न इति जानन् अपि अहं भवतः पुरतः अहङ्कारं प्रदर्शितवान्। मम चिन्तनम् आसीत् यत् मम अहङ्कारेण आहतः भवान् काञ्चित् पाण्डित्यस्पर्धाम् आयोजयेत् इति। मया यथा चिन्तितं तथैव प्रवृत्तम्। स्पर्धायां जयः प्राप्तः यत् तेन तृप्तिः कीर्तिः च प्राप्ता मया" इति।

एतत् श्रुत्वा राजा सन्तुष्टः। सः बृहस्पतिम् उक्तवान्– "भवतः अहङ्कारः नास्ति इति ज्ञातवतः मम महान् सन्तोषः जातः। अहं भावयामि यत् शिष्यत्वेन मम



पुत्रयोः स्वीकारे भवतः काऽपि आपत्तिः नास्ति इति'' इति।

''शिष्यत्वेन स्वीकारात् पूर्वं परीक्षा करणीया इति तु मम नियमः। एतत् अनुमतं न चेत् भवान् स्वपुत्रौ सुरेश्वरस्य गुरुकुलं प्रति प्रेषयितुम् अर्हति'' इति उक्तवान् बृहस्पतिः।

एतत् श्रुतवतः यज्ञपालस्य कोपः आगतः। आचार्यस्पर्धायां सुरेश्वरः अन्तिमं स्थानं प्राप्तवान् आसीत्। तत् स्मारयन् पृष्टवान् राजा– ''महाराजस्य मम पुत्रौ उत्तमस्य गुरोः सकाशात् विद्याभ्यासं कर्तुम् अनर्हौ इति किल भवतः आशयः?'' इति।

तदा बृहस्पतिः मन्दहासपूर्वकम् उक्तवान्– ''पाण्डित्यं पाठनम्– इत्येतयोः न कोऽपि विशेषसम्बन्धः। पाण्डित्यप्राप्तौ मम अभिरुचिः। अधिकं पठनीयम् इति मम इच्छा। अतः अहं तीक्ष्णमतीन् छात्रान् केवलं शिष्यत्वेन स्वीकरोमि। ते तु पाठसमये बहून् कठिनान् अपि सन्देहान् प्रष्टुम् अर्हन्ति। तद्वा ममापि अध्ययनं भवति, बुद्धिः तीक्ष्णा भवति, ज्ञानं च वर्धते। अतः शिष्यान् द्वारीकृत्य पाण्डित्यप्राप्तिः मम जीवनस्य लक्ष्यम्। सुरेश्वरः न एवम्। स्वबुद्धेः तीक्ष्णीकरणे तस्य तात्पर्यं नास्ति। छात्राणां बुद्धेः तीक्ष्णीकरणं सदा चिन्तयति सः। अतः पाठने समर्थतमः सः। भवता तु पाण्डित्यस्पर्धा आयोजिता। तत्र मया जयः प्राप्तः। पाठनकौशलस्पर्धा यदि भवता आयोजिता अभविष्यत् तर्हि सुरेश्वरः प्रथमस्थानं प्राप्तवान् अभविष्यत्। अतः महापाण्डित्येन हीनः अपि सुरेश्वरः पाठनसमर्थेषु आचार्येषु आद्यः एव'' इति।

पाण्डित्यं पाठनकौशलं च भिन्नम् इत्यंशः सम्यक् अवगतः यज्ञपालेन। अतः सः ज्येष्ठं पुत्रं श्रीधरं बृहस्पतेः गुरुकुलं प्रति प्रेषितवान्। कनिष्ठं विद्याधरं च सुरेश्वरस्य गुरुकुलं प्रति प्रेषितवान्। योग्यस्य गुरोः प्राप्त्या उभौ अपि राजकुमारौ कालान्तरे विद्यानिपुणौ जातौ।





# वीरः हनूमान्

रामः नलम् आज्ञापितवान् यत् सागरे सेतोः निर्माणस्य आरम्भः भवतु इति। सर्वे वानराः नलस्य आज्ञां पालयेयुः इत्यपि आज्ञां कृतवान् सः। सेतुनिर्माणकार्यं श्रुतवतां वानराणां महान् उत्साहः। अहमहमिकया ते कार्ये प्रवृत्ताः अभवन्। अरण्यं गत्वा विविधान् वृक्षान् आनीय ते समुद्रे पातितवन्तः। समर्थाः केचन वानराः गजसदृशीः शिलाः आनीय समुद्रे पातितवन्तः। पञ्चदिनाभ्यन्तरे राजमार्गसदृशः दृढः सेतुः निर्मितः अभवत्। शतयोजनविस्तीर्णः आसीत् सः सेतुः। वैशाल्यं तु योजनपरिमितं स्यात्। एतादृशस्य अपूर्वस्य सेतोः दर्शनतः प्रमुदिताः वानराः कार्याभावे अपि सेतोः उपरि इतस्ततः बहुवारं सञ्चारं कृतवन्तः, आनन्दम् अनुभूतवन्तः च।

समग्रा वानरसेना सेतोः साहाय्येन समुद्रस्य क्रमणम् अकरोत्। शत्रुः आगतः चेत् तं निवारयितुं विभीषणः गदां स्वीकृत्य सेतोः अपरतीरे स्थितवान् आसीत्।

सेतुः पादाभ्याम् एव क्रमणीयः इति राम-लक्ष्मणयोः इच्छा। किन्तु तयोः तादृशं गमनं न इच्छति सुग्रीवः। अतः तौ यदा सेतोः उपरि पञ्चषाणि पदानि स्थापितवन्तौ तदा हनूमान् रामम्, अङ्गदः लक्ष्मणं च उन्नीतवन्तौ। आकाशमार्गेण अपरं तीरं प्राप्तवन्तौ च। तेषां रक्षणार्थं केचन वानरभटाः तौ अनुसृतवन्तौ। सेतोः उपरि सम्मर्दः न भवेत् इति आलोच्य सुग्रीवः समर्थान् बहून् आकाशमार्गेण प्रेषितवान्।



समुद्रस्य अपरतीरे फलसमृद्धियुक्तम् अरण्यं विश्रान्त्यर्थं सुविशालं प्रदेशं च प्रदर्शितवान् विभीषणः। 'विश्रान्त्यर्थं समययापनार्थं वा न एषः कालः' इति उक्तवान् रामः। रामस्य आदेशस्य अनुगुणं वानरसेना सिंहनादं कुर्वती लङ्काभिमुखं प्रस्थितवती।

वानरसेना लङ्कानगर्याः पार्श्वे यदा शिबिरम् अकल्पयत् तदा दुर्गस्य अन्तर्भागतः भेरीध्वनयः, मृदङ्गादिध्वनयः, राक्षसानां गर्जनानि च श्रुतानि। एतत्सर्वं श्रुतवतां वानराणां कोपः प्रवृद्धः। तेऽपि उच्चैः सिंहगर्जनं कृतवन्तः। लङ्कायां विविधाः पताकाः उड्डायिताः आसन्। ताः दृष्ट्वा सीतां स्मरन् रामः आर्द्रनेत्रः जातः।

अनन्तरं रामलक्ष्मणौ सुग्रीवसमीपं गत्वा सेनायाः व्यूहः कथं स्यात् इति विषये समालोचनं कृतवन्तौ। अन्ते एवं निर्णीतम्— अङ्गदः नीलेन सह स्वसेनां व्यूहस्य मध्ये निवेशयेत्। ऋषभः सेनया सह दक्षिणपार्श्वे, गन्दमादनश्च सेनया सह वामपार्श्वे च तिष्ठेत्। रामलक्ष्मणौ सेनाव्यूहस्य अग्रभागे भवतः। सुग्रीवः सेनायाः पृष्ठभागे तिष्ठति। समग्रा वानरसेना गरुडव्यूहाकारेण तिष्ठति इति।

रामः सुग्रीवम् उक्तवान्— "रावणदूतत्वेन आगतं शुकम् इदानीं प्रेषयतु तावत्" इति।

पूर्वं रामः यदा दूतस्य शुकस्य गमनार्थम् अनुज्ञां दत्तवान् आसीत् तदा विभीषणः रहसि सुग्रीवम् उक्त्वा शुकं लघुपक्षिरूपेण परिवर्त्य स्वस्य अनुचरस्य गृहे स्थापितवान् आसीत्। एषा वार्ता सुग्रीवद्वारा रामेण ज्ञाता आसीत्। अतः एव शुकस्य विमोचनार्थं सूचनां दत्तवान् अस्ति रामः।

वानरसेनातः विमुक्तः शुकः वेगेन रावणसमीपं गतवान्। रावणः शुकं दृष्ट्वा हसन्— "किं भोः, भवान् पक्षविहीनः इति भाति। वानराः स्वचेष्टाभिः पीडितवन्तः वा भवन्तम्?" इति पृष्टवान्। पुनरपि हसितवान् च।

तदा शुकः रावणम् उक्तवान्— "प्रभो,

समुद्रस्य अपरं तीरं गत्वा सुग्रीवं दृष्ट्वा अहं भवतः सन्देशं यथावत् निवेदितवान्। तत् श्रुत्वा वानराः कुपिताः अभवन्। ते मां गृहीत्वा चित्रहिंसया पीडितवन्तः। ते वानराः न्यूनं सम्भाषणं कुर्वन्ति। तैः उक्तम् अपि न अवगम्यते मया। अतः तेषां सम्भाषणं श्रुत्वा अपि विषयसङ्ग्रहं कर्तुं न शक्तम्। अत्रान्तरे सेतुं निर्माय वानरसेना लङ्कासमीपम् आगता अस्ति। नगरस्य बहिर्भागे सर्वत्रापि वानराः भल्लूकाश्चैव दृश्यन्ते। वानरसेना यस्मिन् कस्मिंश्चित् क्षणे दुर्गस्य उपरि आक्रमणं कर्तुम् अर्हति। सीतासमर्पणं केवलं युद्धं निवारयेत्। श्रुत्वा देवः प्रमाणम्'' इति।

शुकवचनं शृण्वतः रावणस्य मुखं कोपेन आरक्तं जातम्। ''समग्रः भूलोकः एव मम उपरि आक्रमणं करोति चेदपि अहं सीतां तु न त्यजामि। युद्धार्थं बहोः कालतः मम बाहवः बहुधा स्फुरन्ति। मम सामर्थ्यं सम्यक् अजानन् रामः युद्धार्थम् आगतवान् अस्ति। मम बाणैः आहतः सः पलायनं करिष्यति'' इति कोपेन उक्तवान् रावणः।

सः मन्त्रिणौ शुकसारणौ आहूय आदिष्टवान्– ''समुद्रे सेतोः निर्माणं न विश्वासार्हम्। सेतुः वस्तुतः निर्मितः वा, निर्मितः एव चेत् कः उपायः आश्रितः इति ज्ञात्वा आगच्छतां भवन्तौ। रामस्य सेनायाः परिमाणम् अपि ज्ञातव्यम्। तदीयानि शस्त्रास्त्राणि कीदृशानि इत्यपि ज्ञातव्यम्। सर्वं ज्ञात्वा मां निवेदयताम्'' इति।

शुकसारणौ तत्क्षणे एव ततः प्रस्थाय





वानररूपं धृत्वा वानरसेनां प्रविष्टवन्तौ। अगणितायाः वानरसेनायाः परिमाणं ज्ञातुं न शक्तं ताभ्याम्। यत्र यत्र दृष्टिः प्रसार्यते तत्र सर्वत्र वानरसेना दृश्यते। सेतुमार्गेण पुनः आगच्छन्ती अस्ति अपि। 'अतः एतस्याः गणना असाध्या' इति निर्णीतवन्तौ तौ।

अत्रान्तरे विभीषणः तौ अभिज्ञाय गृहीत्वा रामस्य पुरतः नीत्वा– "एतौ शुकसारणनामकौ राक्षसौ रावणस्य मन्त्रिणौ" इति निवेदितवान्।

तौ रामं विनयेन नमस्कृत्य आत्मनः दूतत्वम् अङ्गीकृतवन्तौ। तदा रामः हसन्– "अस्तु तावत्। अस्मत्सेना द्रष्टव्या खलु? पश्यतां तावत्। सर्वं ज्ञात्वा लङ्कां प्रतिगच्छताम्। स्वयं दर्शने भवन्तौ असमर्थौ चेत् विभीषणः भवतोः साहाय्यं करिष्यति। भवन्तौ निरायुधौ इत्यतः प्राणापायभीतिः नास्ति भवतोः" इति उक्त्वा तौ विभीषणाधीनौ कृतवान्।

रामः शुकसारणद्वारा रावणं प्रति एकं सन्देशम् अपि प्रेषितवान्। स च सन्देशः एवम्– "रावण! श्वः प्रातः अस्माकं कोपाग्निः अशनिः इव लङ्कायाः उपरि पतिष्यति, सर्वं भस्मसात्करिष्यति च" इति।

शुकसारणौ रामं जयघोषेण तोषयित्वा विभीषणस्य साहाय्येन सर्वं दृष्ट्वा रावणसमीपं गतवन्तौ।

"प्रभो, शुकेन पूर्वं यत् उक्तं तत् यथार्थम् एव। सेतुनिर्माणवार्ता अस्माभिः न ज्ञातव्या इति उद्देशेन वानरैः शुकः बन्धने स्थापितः आसीत्। सेतुं निर्माय लङ्कासमीपम् आगत्य ते तं बन्धविमुक्तं कृतवन्तः। आवां वानररूपेण शत्रुसेनां प्रविष्टवन्तौ। किन्तु विभीषणः आवां कौ इति ज्ञातवान् एव। सः आवां रामसमीपं नीतवान्। रामः दयया आवयोः गमनार्थं सेनादर्शनार्थं च अवकाशं कल्पितवान्। आवां शत्रुपक्षीयौ इति ज्ञात्वा अपि सेनादर्शनार्थम् अवकाशं कल्पयतः तस्य रामस्य अहो, आत्मविश्वासः! लक्ष्मणः, सुग्रीवः, विभीषणश्च रामस्य प्रमुखाः साहाय्यकाः। रामस्य धनुर्बाणादीन् पश्यामः चेत् ज्ञायते यत् जयप्राप्त्यर्थं सः कस्यापि

साहाय्यं न अपेक्षते इति। वानरसेनायाः महान् भागः समुद्रम् अतिक्रम्य आगता अस्ति। इतोऽपि आगच्छन्ती एव अस्ति। अतः तस्याः सेनायाः सीमा इयत्ता वा ज्ञातुं न शक्या एव। 'जयः अस्माकम् एव' इति रामपक्षे निश्चयः कृतः दृश्यते। युद्धं परित्यज्य सीतायाः प्रत्यर्पणम् एव वरम् इति भाति" इति उक्तवान् सारणः।

रावणः क्रोधेन सारणम् उक्तवान्– "सर्वेषां समानः उपदेशः– सीता अर्पणीया इति। किन्तु तत् कदापि न शक्यते। भवान् तु कश्चन भीरुः। वानराणां चेष्टां दृष्ट्वा एव भीतः भवान्। मां जेतुं कः समर्थः अस्ति लोके? मम सामर्थ्यं जानन् अपि, मम पक्षे तिष्ठन् अपि भवान् माम् एवम् उपदिशति खलु? अहो दैवगतिः चित्रा!" इति।

"सारणः यत् वदति तत्र यथार्थता अस्ति प्रभो" इति उक्तवान् शुकः।

वानरसेना द्रष्टव्या इति इच्छा उत्पन्ना रावणस्य मनसि। सः अट्टम् आरुह्य परितः दृष्टिं प्रसारितवान्। लङ्कानगरं परितः स्थिताः पर्वताः अरण्यानि च वानरमयानि दृष्टानि तेन। सर्वं पश्यन् समीपस्थं सारणं पृष्टवान् सः– "वानरसेनायां बलशालिनः शूराः प्रमुखाः के के? सेनाधिपतिः कः? सुग्रीवस्य मार्गदर्शकः कः?" इति।

तदा सारणः उक्तवान्– "प्रभो, समग्रायाः सेनायाः अधिपतिः नीलः। अङ्गदः वानरराज्यस्य युवराजः। वालिनः पुत्रः सः पराक्रमेण वालितुल्यः एव। इतः पूर्वम् अत्र





आगतः हनूमान् अपरः प्रमुखः। तस्य बल-पराक्रमादिकं तु भवता श्रुतं, किञ्चित् दृष्टं च। हनूमतः एव पृथक् दलम् अस्ति। तस्य दलस्य तु विशिष्टा शक्तिः। दूरे दृश्यमानस्य धवलकायस्य नाम श्वेतः इति। यस्य पुच्छं रक्तवर्णेन पीतवर्णेन च शोभते सः कुमुदः किम् अधिककथनेन? यदा कुमुदः रणाङ्गणे अग्रे भवति तदा सर्वे वानराः निश्चिन्ताः भवन्ति। दूरे वृद्धः भल्लूकशरीरः दृश्यते खलु। सः जाम्बवान्। अनुभवशालिनः एतस्य वचनं सर्वमान्यम् अस्ति। योग्यमार्गदर्शने सः ख्यातः। ततः अन्यस्मिन् पार्श्वे दृश्यमानाः रम्भः, शरभः, पनसः इत्यादयः। एतेषु एकैकः अपि पराक्रमेण असमानः। एतादृशाः सन्ति इत्यतः एव रामः जयप्राप्तिविषये निश्चिन्तः" इति।

सारणेन ये वानरप्रमुखाः न उल्लिखिताः तेषां विवरणं शुकः सूचितवान्। हनूमतः पार्श्वे स्थितौ रामलक्ष्मणौ अपि तेनैव प्रदर्शितौ। रामपार्श्वे स्थितः विभीषणः रावणेन दृष्टः। विभीषणं दृष्टवतः तस्य कोपः नितरां प्रवृद्धः। मन्त्रिणौ शुकसारणौ शत्रुपक्षीयाणां वीराणां पराक्रमादिकं प्रशंसतः यत् तेन सः क्रुद्धः आसीत् एव। इदानीं तु उभयथा आगतः कोपः अपि मिलितः। सः उच्चैः गर्जितवान्– "अलं जल्पनेन। भवादृशेषु भीरुषु मन्त्रिषु सत्सु, मम जीवनं व्यर्थम् एव। भवन्तौ इतः पूर्वं यत् उत्तमकार्यं कृतवन्तौ तत् स्मरन् भवन्तौ सजीवं त्यजन् अस्मि। इतः निर्गम्यतां झटिति" इति।

रावणं नमस्कृत्य मौनं ततः निर्गतवन्तौ शुकसारणौ। अनन्तरं रावणः महोदरद्वारा कांश्चन गूढचरान् आनाय्य– "भवन्तः सर्वे गत्वा रामसेनायाः विषये विशेषवार्ताः सङ्गृह्य आगच्छन्तु" इति आज्ञापितवान्।

ते गूढचराः छद्मवेषं धृत्वा सुवेलपर्वतसमीपे स्थितानां रामलक्ष्मण-सुग्रीवादीनां समीपं गतवन्तः। रामलक्ष्मणादीन् दूरात् एव दृष्ट्वा तेषां हृदये कम्पनम् उत्पन्नम्। अनतिदूरे एव स्थितं विभीषणं दृष्टवतां तु तेषां मुखं विच्छायं

जातम्। विभीषणः झटिति एव तान् अभिज्ञातवान् गृहीतवान् च। तेषु अन्यतमः शार्दूलः नितरां दुष्टः। सः वानरान् निन्दितुम् आरब्धवान्। तदा कुपिताः वानराः तं मारयितुम् उद्युक्ताः। रामः तादृशं प्रयत्नं निवार्य शार्दूलं तदनुचरौ च बन्धविमुक्तान् कृतवान्। नितरां व्रणिताः ते लङ्कां प्रतिगतवन्तः।

तेषां तादृशीं गतिं दृष्ट्वा यावत् रावणः किमपि प्रष्टुम् उद्युक्तः ततः पूर्वम् एव उक्तवान् शार्दूलः– ''वानरसेनायाः विषये अधिकं ज्ञातुं सर्वथा न शक्यते। विभीषणः अत्र विघ्नायते। सः एव अस्मान् अभिज्ञाय बन्धनं कारितवान्। हन्तुम् उद्युक्तान् वानरान् निवार्य अस्मान् रक्षितवान् रामः। दैवानुग्रहबलात् वयं सजीवं प्रत्यागताः। वानराणां ग्रहणं प्राणहरम् अस्ति। अहो वानरबलम्! अहो रामस्य तेजस्विता! सीतां समर्प्य सन्धिप्रस्तावः कृतः चेदेव वरम् इति मम आशयः। युद्धम् अस्मदनुकूलकरं न भवेत् इति वदति मम अन्तरङ्गम्'' इति।

''धिक् भवन्तम्! धिक् भवतः उपदेशम्! सीताप्रत्यर्पणप्रस्तावस्य श्रवणम् अपि न सहे। अतः तं विषयं परित्यज्य रामसेनाविषये यावत् ज्ञातं तावत् निवेदयतु'' इति कोपेन उक्तवान् रावणः। अनन्तरं विविधैः प्रश्नैः रामसेनाविषये विषयसङ्ग्रहं कृतवान् सः।

अनन्तरं सः विद्युज्जिह्वनामकं राक्षसम् आनाय्य तेन सह सीतासमीपं प्रस्थितवान्। विद्युज्जिह्वः मायाविद्याचतुरः। तम् उक्तवान् रावणः– ''भवान् मायया रामस्य शिरः सृजतु। रामस्य धनुर्बाणादीन् अपि सृजतु। तानि प्रदर्श्य सीतायाः धैर्यच्युतिं करवाम। तदा सीता स्वयम् इहलोकव्यापारं समापयेत्। सीता मृता चेत् रामस्य सर्वस्वं नष्टम् इव। ततः अस्माकम् एव जयः'' इति।

विद्युज्जिह्वः एतं प्रस्तावम् अङ्गीकृतवान्। तदा सन्तुष्टः रावणः स्वकण्ठस्थम् एकम् अमूल्यं हारं विद्युज्जिह्वस्य कण्ठे स्थापितवान्।





# परिणयार्हः कः?

बहुभ्यः वर्षेभ्यः पूर्वं चीनादेशस्य कस्मिंश्चित् ग्रामे कश्चन धनिकः आसीत्। तस्य एकमात्रपुत्री आसीत्। तस्याः सौन्दर्यम् अपूर्वम्। समर्थस्य गुरोः सकाशात् तया योग्यः विद्याभ्यासः कृतः आसीत्।

धनिकपुत्री प्राप्तवयस्का जाता। तस्याः विद्यानैपुण्यं सौन्दर्यं च श्रुत्वा धनिककुले जाताः त्रयः युवकाः तां परिणेतुम् अग्रे आगतवन्तः।

धनिकः विविधैः प्रश्नैः तान् त्रीन् अपि परीक्षितवान्। किन्तु त्रयाणाम् अपि बुद्धिबलं समानं दृष्टं तेन। एतेषु कः श्रेष्ठः इति कथं निर्णयः इति न जानाति धनिकः।

'योग्यस्य वरस्य चयनं मम बुद्धिमती पुत्री एव करोतु' इति आलोच्य धनिकः पुत्रीं सर्वं निवेदितवान्।

तदा धनिकपुत्री– "अस्तु, मया एव खलु एतेषु अन्यतमः परिणीयते? अतः योग्यस्य चयनं करिष्यामि" इति उक्तवती। किन्तु दौभाग्यवशतः अनन्तरदिने एव सा अस्वस्था जाता। मासं यावत् तस्याः अस्वास्थ्यम् अनुवृत्तम्।

अस्वास्थ्यं क्रमशः व्याधिरूपेण परिवृत्तम्। वैद्यानां विविधाः चिकित्साः अपि विफलाः जाताः। धनिकपुत्री प्राणैः वियुक्ता अभवत्।

तस्याः मरणं ज्ञातवतां त्रयाणाम् अपि युवकानाम् इदानीं महत् दुःखम्। ते त्रयः अपि सम्भूय उद्याने गर्तं खनित्वा श्वेताभिः अमृतशिलाभिः अलङ्कृतम् एकं शवस्तूपं निर्मितवन्तः।

तेषु अन्यतमः तस्य शवस्तूपस्य पार्श्वे एव उपविश्य पुष्पैः शवस्तूपम् अलङ्कुर्वन् अन्तर्निहितेन दुःखेन दह्यमानः दिनानि



यापयति स्म।

अपरः युवकः पुत्रीवियोगेन नितरां खिन्नस्य धनिकस्य सेवां कुर्वन् धनिकगृहे एव वासं कृतवान्।

तृतीयः युवकः तु वैराग्यं प्राप्य संन्यासं स्वीकृत्य ज्ञानार्जनेच्छया योग्यस्य गुरोः अन्वेषणं कुर्वन् ग्रामात् ग्रामम् अटितवान्।

कदाचित् सः संन्यासी युवकः ज्ञातवान् यत् समीपस्थे ग्रामे कश्चन महापण्डितः अस्ति इति। सः पण्डितः न केवलं सर्वशास्त्रपारङ्गतः, अपि तु अपूर्वाः शक्तीः स्वाधीनीकृतवान् आसीत् अपि। अतः संन्यासियुवकः तस्य पण्डितस्य दर्शनार्थं गतवान्।

सः पण्डितः संन्यासिनं युवकम् आदरेण स्वागतीकृत्य तदीयानां संशयानां योग्यम् उत्तरं दत्तवान्। भोजनार्थम् आत्मना सह युवकम् अपि नीतवान्।

भोजनसमये पण्डितस्य दशवर्षीयः पुत्रः आगत्य 'तत् आवश्यकम्' 'एतत् आवश्यकम्' इत्येवं पितरं बहुधा पीडितवान्। अल्पे एव काले पण्डितस्य असहना प्रवृद्धा। 'अये मूर्ख! अनुक्तग्राहिन्!'' इति कोपेन,निन्दन् पार्श्वस्थे ज्वलति अग्नौ पुत्रं बलात् पातितवान् पण्डितः।

एतत् दृष्टवतः युवकस्य महत् आश्चर्यं, भीतिः जुगुप्सा च। सः पण्डितं नररूपिणं राक्षसं भावयन् उक्तवान्– ''श्रीमन्! महाशक्तिशाली पण्डितः भवान् विवेकी इति अहं चिन्तितवान् आसम्। किन्तु भवतः कृत्यतः मया निर्णीतं यत् भवान् राक्षसात् अपि अधमः इति'' इति।

युवकसंन्यासिनः उद्वेगयुक्तं वचनं श्रुत्वा अपि पण्डितः शान्ततया मन्दहासपूर्वकम् उक्तवान्– ''वचनानि कृत्यानि च परिशील्य कः कीदृशः इति निर्णेतव्यम् इति तु सत्यम् एव। किन्तु मम विषये तथा न। लौकिकदृष्ट्या भवान् मम कृत्यं पश्यन् अस्ति। अतः मदीयं कृत्यम् अमानुषम् इति भवान् चिन्तयति। आत्मनः योग्यतायाः अनुगुणं चिन्तितं भवता'' इति।

''अलम् आत्मसमर्थनेन। कन्दम् इव पुत्रम्

अग्नौ निर्दयं पातयतः भवतः कृत्यं किम् अमानुषं न? नरभक्षी अटविकः इव व्यवहृतवान् भवान्" इति कोपेन उक्तवान् युवकसंन्यासी।

पण्डितः उत्तरं किमपि अवदन् मन्दहासपूर्वकम् एव मन्त्रं जपन् पञ्चषाः मुद्राः कृतवान्। तावता पण्डितस्य पुत्रः पुष्पराशितः इव अग्नितः बहिः आगत्य मन्दहासपूर्वकं पितुः समीपं गत्वा पितरं प्रीत्या आलिङ्गितवान्। पुत्रस्य शरीरे अल्पः अपि व्रणः न आसीत्।

एतत् दृष्ट्वा युवकसंन्यासी महत् आश्चर्यम् अनुभवन् पण्डितं साष्टाङ्गं नमस्कृत्य– "महात्मन्! भवतः अलौकिकं कृत्यं पामरः इव निन्दितवान् अहम्। क्षन्तव्यः अहम्" इति उक्त्वा पण्डितस्य अनुग्रहतः मृतोज्जीवनमन्त्रं ज्ञात्वा तं कृतज्ञतावचनानि उक्त्वा मन्त्रं पुनः पुनः स्मरन् ततः निर्गतवान्।

ततः निर्गतः सः धनिकपुत्र्याः शवस्तूपस्य समीपं गत्वा मन्त्रम् उच्चारयन् विविधाः मुद्राः कृतवान्। तावता धनिकपुत्री मन्दहासपूर्वकं शवस्तूपतः बहिः आगत्य स्थितवती।

एषा वार्ता धनिकेन अपि श्रुता। सः धावन् पुष्पोद्यानं प्रति आगतवान्। पुत्रीं प्रीत्या पुनः पुनः आलिङ्ग्य– "वत्से, पुनर्जन्म प्राप्य मां सन्तोषसागरे निमज्जितवती। एतेषु त्रिषु अन्यतमं परिणीय एतं मम सन्तोषं द्विगुणितं करोतु" इति उक्तवान्।



धनिकपुत्री किमपि वक्तुं यावत् उद्युक्ता तावता प्रथमः युवकः उक्तवान्– "भवतीं परिणेतुम् अर्हः अहम् एव। वृष्टिं शैत्यं तापं च अविगणयन् भवतीं स्मरन् अहम् अहोरात्रं शवस्तूपस्य पार्श्वे एव उपविष्टवान् आसम्" इति।

द्वितीयः युवकः उक्तवान्– "भवत्याः मरणस्य अनन्तरं भवत्याः पितुः सेवां कुर्वन् तस्य आरोग्यं रक्षन् अहं दिनानि यापितवान्। भवत्याः प्रियस्य पितुः योगक्षेमं दृष्टवान् अहम् एव योग्यः वरः" इति।

तृतीयः युवकः उक्तवान्– "भवत्याः वियोगतः विरक्तिं प्राप्य संन्यासव्रतं गृहीत्वा ग्रामात् ग्रामम् अटन् महापण्डितस्य कस्यचित् सकाशात् अपूर्वं मन्त्रं प्राप्य अहं भवतीम् उज्जीवितवान्। यदि अहं भवतीम् उज्जीवितवान् न स्यां तर्हि भवती पुनर्जीवनं विवाहावकाशं वा प्राप्तवती न स्यात्। भवत्याः अभ्युदयस्य मूलं कारणम् अहम्। अतः भवतीं परिणेतुम् अर्हः अहम् एव" इति।

त्रयाणाम् अपि वचनं श्रुत्वा हसन्ती धनिकपुत्री उक्तवती– "मम मरणानन्तरं मम पितुः यः आधाररूपेण आसीत् सः पितुः पुत्रः इव। अतः मम सहोदरः इव। संन्यासं स्वीकृत्य ग्रामात् ग्रामम् अटन् अपूर्वं मन्त्रं प्राप्य मां यः उज्जीवितवान् सः परोपकारी मम जन्मदाता पिता इव। यः माम् एव स्मरन् शवस्तूपस्य पार्श्वे उपविश्य महान्तम् अनुरागं प्रदर्शितवान् सः एव मम प्रियः। तम् एव परिणेष्यामि अहम्। पितृतुल्यं सोदरतुल्यं च विनयेन प्रार्थये यत् आशीर्वादेन अहम् अनुग्रहणीया इति" इति।

धनिकः पुत्र्याः वचनं पुरस्कुर्वन् सा यम् इष्टवती तस्मै एव तां दत्तवान्। विवाहं सवैभवं निर्वर्तितवान् च।

संन्यासी पुनरपि वैराग्यं प्राप्य तपश्चरणार्थम् अरण्यं गतवान्। सोदरतुल्यः च धनिकस्य सेवां कुर्वन् धनिकस्य पुत्रः इव एव जातः।






# अहङ्कारत्यागः

चन्दनपुरे पूर्वं चिदानन्दः नाम महापण्डितः आसीत्। तस्य सम्पत्तिः प्रभूता आसीत्। अतः तस्य जीवननिर्वहणं सुखेन प्रचलति स्म। अतः एव सः उत्तमान् शिष्यान् कांश्चन चित्वा तान् यथाशक्ति पाठयन् काव्यानि लिखन्, यथाशक्ति परोपकारं च कुर्वन् तृप्त्या जीवनं यापयति स्म।

चन्दनपुरे वागीशः नाम कविः अपि आसीत्। सः कदाचित् एकं काव्यं निर्माय राज्ञः पुरतः पठितवान्।

राजा कविपोषकः काव्यमर्मज्ञः च। सः वागीशम् उक्तवान्– "भवान् प्रतिभावान् इत्यत्र सन्देहः नास्ति। तथापि भवता परिष्कारः प्राप्तव्यः अस्ति। शाणेन अनुल्लीढः मणिः इव अस्ति भवान्। अस्माकं नगरे चिदानन्दः नाम कविः अस्ति खलु? तस्मै एतत् काव्यं प्रदर्शयतु। तेन सूचितान् परिष्कारान् करोतु। अनन्तरं पुनः मम समीपम् आनयतु" इति।

वागीशः चिदानन्दसमीपं गत्वा स्वस्य काव्यं प्रदर्श्य राज्ञा यत् उक्तं तत् निवेदितवान्। तदा चिदानन्दः उक्तवान्– "भवान् भवदीयं काव्यम् अत्रैव स्थापयित्वा गच्छतु। अहं परिष्कृत्य प्रेषयिष्यामि" इति।

ततः दिनद्वयाभ्यन्तरे एव चिदानन्दः वागीशस्य काव्यं परिष्कृत्य सेवकद्वारा वागीशगृहं प्रति प्रेषितवान्।

तस्मिन् काव्ये चिदानन्देन यः परिष्कारः कृतः सः वागीशाय न अरोचत। वागीशः चिदानन्दस्य गृहं गत्वा उक्तवान्- "श्रीमन्! अल्पः परिष्कारः तु सह्यः एव। किन्तु भवता मम मूलभावः एव परिवर्तितः। मम आशयस्य एव परिवर्तनं भवान् करोति चेत् एतत् काव्यं मदीयं कथं स्यात्?" इति।

"भामहः"



तदा वागीशः पृष्टवान्– "श्रीमन्! अहं वयसा कनिष्ठः इत्यतः अनुभवस्य अपर्याप्तता मम स्यात् नाम। किन्तु कः रसः प्राधान्येन निरूपणीयः, कः अप्राधान्येन इति अहं ज्ञातुं शक्नोमि एव। एवं स्थिते एतावता परिमाणेन किं मम काव्यस्य परिष्कारः युज्यते?" इति।

चिदानन्दः मौनम् आश्रितवान्। तदा वागीशः गर्वेण उक्तवान्– "मम प्रश्नस्य उत्तरं वक्तुं भवतः सामर्थ्यं नास्ति। अतः एव मौनम् आश्रितम्। एवं ननु?" इति।

तदा चिदानन्दः– "वत्स! मम आशयः मया निरूपितः एव। किमर्थं परिष्कारः कृतः इति मया सकारणम् उक्तम्। पुनरपि भवान् तद्विषये एव प्रश्नं पृच्छति चेत् किम् उत्तरं दातव्यम्? भङ्ग्यन्तरेण एकस्य एव विषयस्य पुनः पुनः प्रश्नः भवतः प्रवृत्तिः स्यात्। उक्तस्य एव उत्तरस्य पुनःकथनम् अहं तु न इच्छामि" इति उक्तवान्।

"श्रीमन्! भवान् मद्विषये कुपितः इति भाति। भवता यः परिष्कारः कृतः स च योग्यः इति तु अहम् अङ्गीकरोमि। किन्तु तथाकरणेन मम आशयस्य भङ्गः जातः खलु इति खेदः मम। यः आशयः मम मनसि न आसीत् तादृशेन आशयेन युक्तं काव्यं मदीयम् इति कथम् अहम् अङ्गीकुर्याम्?" इति पृष्टवान् वागीशः।

"काव्यस्य मूलकल्पना पात्राणि च

तदा चिदानन्दः मन्दहासपूर्वकम् उक्तवान्– "वत्स! प्रतिभाशाली भवान्। किन्तु प्रतिभामात्रेण उत्तमं काव्यं रचितं न भवति। रसानां परस्परविरोधो न स्यात्। रसानां पोषणं कदा करणीयं, कदा न करणीयम् इत्यादिकं सम्यक् ज्ञातव्यम्। भवता तु बहूनां रसानां योजने परिश्रमः कृतः। किन्तु अङ्गाङ्गिभावनिर्वहणे सफलता न प्राप्ता। अतः एव राजा भवन्तं मत्समीपं प्रेषितवान्। मया तु भवता निरूपितस्य एकस्य रसस्य प्राधान्यं कल्पितम्। अन्येषाम् अङ्गत्वं परिकल्पितम्। यदि एवं न क्रियेत तर्हि काव्यस्य श्रेष्ठत्वं न स्यात्" इति।

भवदीयानि एव। अतः काव्यम् अपि भवदीयम् एव, न अन्यस्य। भवतः मनसि यः खेदः अस्ति तस्य कारणं भवतः अहङ्कारः। वयसः प्रतिभायाः च अननुगुणः अहङ्कारः अस्ति भवतः। अहङ्कारम् हृदयतः दूरीकरोतु। तदा खेदः स्वयम् अपगच्छति'' इति बोधितवान् चिदानन्दः।

''श्रीमन्! मयि यः आत्मविश्वासः अस्ति तं भवान् अहङ्कारं भावयति इति मन्ये अहम्'' इति उक्तवान् वागीशः।

''भवति आत्मविश्वासः नास्ति। यदि स्यात् तर्हि भवान् राज्ञः वचनं श्रुत्वा मम समीपं न आगमिष्यत्, अपि तु अन्यराजस्य समीपम् अगमिष्यत्। अन्यराजस्य पुरतः काव्यं पठित्वा पारितोषिकं प्राप्स्यत्'' इति उक्तवान् चिदानन्दः।

''इदानीं तर्हि तथैव करोमि चेत् भवान् मयि आदरवान् स्यात् वा?'' इति पृष्टवान् वागीशः।

''सर्वथा न। अहङ्कारकारणतः प्रतिभाविकासं निवारयन् अस्ति भवान् इति खेदं प्राप्नोमि। अहं श्रेष्ठः इति भावः आत्मगौरवलक्षणं न। 'प्रयत्नेन श्रेष्ठत्वं प्राप्य अन्ये श्रेष्ठ इति यथा वदेयुः तथा करोमि' इति भावना एव आत्मविश्वासः'' इति उक्तवान् चिदानन्दः।

वागीशः प्रतिवचनं किमपि अनुक्त्वा स्वकाव्यं स्वीकृत्य ततः निर्गतवान्। राज्ञः पुरतः पठितवान् च। तत् श्रुत्वा राजा इदानीं सन्तुष्टः। तदा वागीशः उक्तवान्– ''प्रभो, चिदानन्देन यः परिष्कारः कृतः तेन एवं काव्यस्य उत्कृष्टता सिद्धा। सर्वं चिदानन्दस्य परिष्कारस्य फलम्'' इति।

वागीशस्य विनयं दृष्ट्वा राजा नितरां सन्तुष्टः। सः पारितोषिकदानेन वागीशं विशेषतः सत्कृतवान्।

अहङ्कारत्यागतः अल्पे एव काले वागीशस्य परिपक्वता आगता। आत्मनः दोषान् सः स्वयं ज्ञातुं शक्तवान्। अतः अल्पे एव काले महाकविः इति कीर्तिः प्राप्ता तेन।






# वायसतैलम्

सहस्राधिकवर्षेभ्यः पूर्वम् अवन्तीराज्यं अनूपवर्मा नाम राज पालयति स्म। तस्य आस्थाने कश्चन ज्योतिषिकः अपि आसीत्। सः प्रतिदिनं उषःकाले स्नानार्थं नदीं गत्वा नद्यां स्नात्वा प्रत्यागच्छति स्म।

नदीगमनमार्गे किञ्चन आम्रोद्यानम् आसीत्। कदाचित् स्नानं समाप्य ज्योतिषिकः गृहं गच्छन् आसीत्। तदा आम्रोद्याने आम्रवृक्षस्य शाखायाम् उपविष्टः कश्चन कांकः ज्योतिषिकस्य उपरि विष्ठाम् अपातयत्। एतेन ज्योतिषिकस्य कोपः आगतः। सः कोपेन प्रनिज्ञां कृतवान् यत् न केवलं विष्ठां पातितवन्तम्, अपि तु समग्रं काककुलम् एव नाशयिष्यामि इति।

प्रतिज्ञापूरणार्थं कश्चन अवकाशः अपि तेन प्राप्तः। स च एवम्–

राज्ञः प्रासादं परितः स्थितस्य दुर्गस्य समीपे कश्चन वृद्धः कुटीरं निर्माय निवसति स्म। सः कदाचित् अङ्गणे धान्यं प्रसार्य रक्षणार्थम् उपविष्टवान् आसीत्। वृद्धः उपविष्टः एव मध्ये मध्ये निद्रां प्राप्नोति स्म।

वृद्धः यदा निद्रां प्राप्नोति तदा कश्चन गर्दभः आगत्य धान्यं खादति स्म। जागरितः वृद्धः तं गर्दभं दूरं प्रेषयति स्म। एवं द्वित्रवारं प्रवृत्तम्। तथापि गर्दभः चतुर्थवारम् अपि आगत्य धान्यम् अखादत्।

'एषः वराकः गर्दभः सम्यक् दण्डनीयः' इति निश्चित्य वृद्धः विना शब्दं गत्वा गर्दभं गृहीतवान्। रज्ज्वा तं पार्श्वे बद्धवान्। अनन्तरं तालपत्राणि तैलेन आर्द्रीकृत्य गर्दभस्य पुच्छे बद्धवान्। ततः अग्निं संयोज्य गर्दभं बन्धविमुक्तं कृतवान्। पुच्छे योजितम् अग्निं दृष्ट्वा भीतः गर्दभः मतिभ्रान्तः इव इतस्ततः अधावत्। सर्वत्र धावन् सः

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

गजशालां प्राविशत्। क्षणमात्रेण गजशाला अग्निना ग्रस्ता जाता।

अग्निं दृष्ट्वा दिग्भ्रान्ताः गजाः उच्चैः घीङ्कुर्वन्तः इतस्ततः धावितवन्तः। गजशालातः निर्गत्य मार्गे अपि केचन गजाः धावितवन्तः। केचन च अग्निना दग्धकायाः अभवन्।

जनानां मध्ये गजानां धावनतः राजधान्यां महान् कोलाहलः उत्पन्नः। तावता हस्तिपकाः एताम् आकस्मिकघटनां ज्ञात्वा गजशालासमीपं गत्वा गजान् गृहीत्वा बद्धवन्तः। घण्टानन्तरं कोलाहलः शान्तः।

गजवैद्याः व्रणितानां गजानां चिकित्सां कृतवन्तः। विविधानि तैलानि सज्जीकृत्य लेपितवन्तः। तथापि दाहात् जाताः व्रणाः न उपशान्ताः।

ज्योतिषिकः एतादृशं समयम् एव प्रतीक्षमाणः आसीत्। सः राजसमीपं गत्वा उक्तवान्– "प्रभो, सामान्येन तैलेन गजानां व्रणाः न उपशाम्यन्ति। तदर्थं काकानां मेदसा वायसतैलं सज्जीकरणीयम्। अग्निजातः गजव्रणः वायसतैलेन केवलं शाम्यति, न तु अन्येन" इति।

राजा एतस्मिन् वचने विश्वसितवान्। सः तस्मिन् एव दिने सडिण्डिमघोषं वार्तां प्रसारितवान् यत् जनैः काकाः ग्रहीतव्याः, राजप्रासादं प्रति आनेतव्याः च। काकग्रहीत्रे प्रतिकाकम् एकं ताम्रनाणकं दीयते इति।



एतां वार्तां श्रुत्वा देशे सर्वे काकान् ग्रहीतुम् उद्युक्ताः अभवन्। सहस्रशः काकाः जनैः गृहीताः। राजप्रासादसमीपे विशालं पञ्जरं निर्मितम्। तत्र ते काकाः स्थापिताः।

काकराजः काकानाम् एतां दुरवस्थां दृष्ट्वा खिन्नः। कश्चित् मानवः अविवेकी इत्यतः एषा दुरवस्था इति ज्ञातवान् सः। एतदर्थं मानवानां राज्ञः दर्शनम् एव वरम् इति आलोच्य काकराजः राजप्रासादं गतवान्। तत्समये राजसभा प्रचलन्ती आसीत्। काकराजः वेगेन सभां प्रविश्य सिंहासनस्य उपरि उपाविशत्।

काकस्य हठात् प्रवेशं सिंहासनस्य उपरि उपवेशनं च दृष्ट्वा दिग्भ्रान्ताः रक्षकभटाः काकं ग्रहीतुं मारयितुं च उद्युक्ताः। तदा

काकराजः आर्तस्वरेण— "महाराज! रक्षतु माम्। रक्षतु माम्" इति मानवभाषया अवदत्। काकमुखात् आगतं मानववचनं श्रुत्वा आश्चर्यचकितः राजा नेत्रसङ्केतेन भटान् दूरं प्रेषितवान्।

काकराजः मानवभाषया राजानम् अवदत्— "महाराज! मम वचनं शान्ततया श्रुत्वा सारासारतां विचार्य भवान् यथोचितं निर्णयतु। राजा अन्यवचने कदापि विश्वासं न कुर्यात्। सारासारता प्रथमं चिन्तनीया। अविचार्य कृतं कार्यं बहूनां दुःखस्य कारणं भवेत्। भवतः आस्थानस्य ज्योतिषिकः काकमेदसा गजव्रणं दूरीकरोमि इति उक्तवान् खलु? वस्तुतस्तु काकशरीरे मेदः एव न भवति। एवं स्थिते मेदसः तैलस्य सज्जीकरणं कथं शक्येत? भवदास्थान-ज्योतिषिकः मिथ्यावादी" इति।

तदा राजा पृष्टवान्— "काकानां शरीरे मेदः किमर्थं न भवति?" इति।

"पौष्टिकाहारस्य सेवनेन खलु शरीरे मेदः वर्धते? काकाः तु मानवेभ्यः भीताः सन्तः कष्टेन आहारं प्राप्नुवन्ति। अल्पः आहारः किं मेदः जनयेत्? सर्वथा न खलु? एषः ज्योतिषिकः क्षुल्लकेन कारणेन काकान् द्विषन् काककुलस्य नाशं प्रतिज्ञाय इदानीं मिथ्यावचनेन भवन्तं वञ्चयित्वा पैशाचतृप्तिम् अनुभवन् अस्ति" इति उक्त्वा काकराजः पूर्वतनघटनां राजानं निवेदितवान्।

एतेन राज्ञि विवेकः उदितः। बन्धने स्थापितान् सर्वान् काकान् बन्धविमुक्तान् कृत्वा राजा नियमं कृतवान् यत् देशे केनापि काकाः न मारणीयाः इति। मिथ्यावादिनं काकद्वेषिणं ज्योतिषिकं पदवीतः च्यावितवान् सः। 'इतः परं राजभवने प्रतिदिनं गोणीमितं धान्यं काकेभ्यः अर्पणीयम्' इति अधिकारिणः आज्ञापितवान् सः।

'काककुलं रक्षितं भवता। तदर्थं कृतज्ञाः वयम्' इति राजानम् उक्त्वा राज्ञः अनुज्ञां प्राप्य काकराजः ततः सन्तोषेण निर्गतवान्।



# प्रकृतिवैचित्र्याणि–

## कूर्दने सहकरोति पुच्छम्

आष्ट्रेलियादेशीयाः काङ्गरूप्राणिनः प्रायः न धावन्ति, न वा चलन्ति। कथं तर्हि तेषां गमनम्? ते सदा कूर्दन्ति। प्रौढः काङ्गरूप्राणी सकृत्कूर्दनेन ३० द्वादशाङ्गुलदूरं क्रमितुं शक्नोति। कूर्दनसमये सः पुच्छतलं भूमिं सम्यक् संश्लिष्य तिष्ठति। अतः एव सः आत्मनः समतोलनं प्राप्नुवन् अग्रे कूर्दति। यदा पुच्छम् उन्नीतं भवति तदा काङ्गरूप्राणी कूर्दनं कर्तुं न शक्नोति।





## गजबृंहणसङ्केतः

गजाः प्रायः गणरूपेण एव सदा सञ्चरन्ति। गणस्य अग्रभागे गणनायकः गच्छति। गणनायकः एव गणरक्षकः अपि भवति। यदा अपायसूचना प्राप्यते तदा गणनायकः शुण्डाम् उन्नीय उच्चैः बृंहति। एतं बृंहणसङ्केतम् अर्धमैल्दूरे स्थिताः अपि गजाः श्रोतुं शक्नुवन्ति। रक्षकगजस्य एतं सङ्केतं सुदूरस्थाः गजाः कथं ग्रहीतुं शक्नुवन्ति इति ज्ञातुं तु मानवेन अद्यापि न शक्तम्।

## शल्यस्य कण्टकानि

मूषकजातीयस्य शल्यस्य समग्रं शरीरं कण्टकमयं भवति। प्रायः एकस्य शल्यस्य शरीरे ३०,००० कण्टकानि भवन्ति। एतानि कण्टकानि कृष्णश्वेतानि, दीर्घाणि, दण्डाकारकाणि च। तानि अन्तस्साररहितानि इत्यतः मषीं पूरयित्वा लेखनीम् इव तानि उपयोक्तुं शक्यते। यदा जले स्थीयते तदा एतानि अन्तःसाररहितानि कण्टकानि उडुपवत् आचरन्ति इत्यतः शल्यः जले सुलभतया तरति।



# आगतः आसीत् प्रकाशः

| | |
|---|---|
| उमेशः - अये उत्तिष्ठतु तावत्। का एषा असमये निद्रा भवतः? तत्रापि उपविश्य एव...। | Get up, I say. Why do you sleep at this hour? That too in a sitting posture! |
| प्रदीपः - उमेश! उपविशतु तावत्। कदा आगतवान् भवान्? | Umesh, first sit down. When did you arrive? |
| उ - पञ्चभ्यः निमेषेभ्यः पूर्वम् एव आगतवान्। भवान् तु उपविश्य निद्रां कुर्वन् अस्ति! | Just five minutes since I came. You are sleeping even as you are sitting! |
| प्र - ह्यः रात्रौ विलम्बेन शयनं कृतवान्। अतः एषा स्थितिः। | I went to bed late yesterday. That is the reason. |
| उ - ह्यः रात्रौ किं भवान् चलनचित्रं द्रष्टुं गतवान् आसीत्? | What? You went for a film yesterday? |
| प्र - न। प्रकाशः आगतः आसीत्। तेन सह वार्तालापं कुर्वन् उपविष्टवान्। समयः कथं गतः इत्येव न ज्ञातम्। | No. Prakash was here; I was chatting with him and did not notice the passage of time. |
| उ - कः प्रकाशः? देहलीस्थः? कदा आगतः? कुत्र सः? न निर्गतवान् स्यात् खलु सः? | Prakash! Who is it? One who is in Delhi? When did he come? Where is he now? He has not gone back I suppose. |
| प्र - परह्यः आगतः आसीत्। अद्य उषःकाले निर्गतः। भवद्विषये बहुधा पृष्टवान् सः। भवान् तु ग्रामं गतः आसीत्। | He came the day before and left this morning. He made a lot of enquiries about you. You had been to your village. |
| उ - अहं तु अद्य प्रातः ग्रामतः आगतः। एवं तर्हि आत्मीयदर्शनतः वञ्चितः अभवम् अहम्। | I came from the village only this morning. That means I narrowly missed meeting my close friend. |
| प्र - चिन्तां मा करोतु। आगमिमासे पुनः तस्य आगमनं सम्भाव्यते। अतः तदा तस्य पुनर्दर्शनं भवेत्। | Don't worry. He may come again next month. You can meet him then. |

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

## विजितां शीर्षिकां जून्-९२ मासे प्रकटयिष्यामः।



M. Natarajan



M. Natarajan

*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा एप्रिल्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, II घट्टः, गिरिनगरम्, बेङ्गलूरु-५६००८५**

---

## 'फेब्रवरी' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - **असत्यां मातरि, सन्तोषलाभः अश्वारोहणात्।**

द्वितीयचित्रम् - **सत्यां मातरि, सन्तोषलाभः याननोदनात्।**

प्रेषकः - रामकृष्ण आचार्यः, श्री सं.अ.स.ती.सं. महाविद्यालयः, द्वारका, जामनगरम्-३८२३३५




Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | |
|---|---|
| अट्टः - | Storeyed house |
| अनुमन्तव्यः - | Should consent |
| अनुल्लीढः - | Unpolished |
| अन्तर्निहितः - | Hidden inside |
| अपख्यातिः - | Bad name |
| अपर्याप्तता - | Inadequacy |
| अमानुषम् - | Brutal |
| अर्चकः - | Priest |
| अशनिः - | Thunderbolt |
| आहतः - | Beaten |
| उडुपः - | Raft |
| कुञ्चिका - | Key |
| कूर्दनम् - | Leaping |
| गुल्मः - | Bush |
| तडित् - | Lightning |
| तायकम् - | Talisman |
| तुला - | A unit of weight of gold |
| निर्झरिणी - | Mountain stream |
| नुदति - | Pushes |
| परिपक्वता - | Maturity |
| प्रभूता - | Plenty |
| बृंहणम् - | Trumpeting of an elephant |
| भङ्ग्यन्तरम् - | Another kind |
| मुसलः - | Pestle |
| मेखला - | A belt of gold worn around the waist |
| मेदः - | Fat |
| यन्त्रागारम् - | Factory |
| लवित्रम् - | Sickle |
| वन्ध्या - | Issueless woman |
| वहनम् - | To bear |
| वायसः - | Crow |
| विष्ठा - | Refuse of birds |
| वोढा - | One who carries weight |
| शल्यः - | Wild-boar |
| शवस्तूपः - | Tomb |
| शाणः - | Touchstone |
| सम्मर्दः - | Rush |
| सह्यः - | Tolerable |
| सूकरः - | Pig |
| हठात् - | Suddenly |

* *   * *

